# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




५३ वर्षे
३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे
दिसम्बर - मार्च, १९९८-९९ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकौ

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






५३ वर्षे
३-४ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
दिसम्बर - मार्च, १९९८-९९ ई.

## परामर्शदातृसम्पादकमण्डलम्





*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

*मुद्रकः —*
**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

*प्राप्तिस्थानम्—*
**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# विषयानुक्रमणी



●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५३ वर्षे | मार्गशीर्ष-फाल्गुन-पूर्णिमे, वि.सं. २०५५ | ३-४ अङ्कौ |
|---|---|---|

# श्रीपरशुरामकल्पसूत्रम्

(अत्रत्यं संस्करणम्)

**डॉ० परमहंसमिश्रः**

ए ३६, बादशाहबाग, वाराणसी



श्रीविद्यासमुपासनायाः सर्वप्राचीनमुपासनाविधानं सर्वतोऽतिशायित्वेन सुव्यवस्थितं यथा स्यात्तथा यदि कुत्रापि दृश्यते, तद्वक्तुं शक्यते यत् परशुरामकल्पसूत्रसंज्ञके कल्पसूत्रग्रन्थ एव द्रष्टुं शक्यते। कृत्तिकाभिधानपूर्वकं कल्पसूत्रसमन्वितमेतस्य परशुरामकल्पसूत्रमित्यभिधानं ग्रन्थस्यावतारिकं महत्त्वं ख्यापयति। सार्धमेव तेन कल्पसूत्रनामप्रकल्पनेन वेदाङ्गत्वं चास्य प्रकाशयति। एतद्विज्ञानपूर्वकं ग्रन्थसंज्ञानं साभिप्रायत्वमपि सूत्रतयाऽऽसूत्रयति।

कल्पशब्देन वेदाङ्गत्वमस्य निर्दिष्टम्। तपस्यमानानामृषीणां मस्तिष्के ब्रह्मणोऽभ्यानर्षणेन मन्त्राणां दर्शनं सुप्रसिद्धम्, श्रुत्या च प्रतिपादितं सम्यक्। मन्त्रसंहितात्मकेन वेदेन ब्रह्मज्ञानमवाप्य तैरेव पुरुषैर्लोकोपकाराय लोकसङ्ग्रहाय च विशेषतो वेदाङ्गानामपि प्रवर्त्तनं कृतम्।

मुण्डकोपनिषदि विद्याया व्याख्यानसन्दर्भे समुदीरितं मनीषिणोपनिषत्प्रवर्त्तकेन यत् "द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च।

तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते''[१]।

मुण्डकेऽस्मिन् वेदस्य षडङ्गविभागो दृश्यते। षडङ्गभङ्गिमायां कल्पोऽपि तरङ्गायते। किं नाम कल्पाङ्गमिति जिज्ञासायां वक्तुं शक्यते यत् कल्पाङ्गेऽस्मिन् मन्त्रसम्बद्धस्य क्रियासिद्धांशस्य व्यापकं प्रतिपादनं क्रियते शास्त्रकारैरिति पुरा वेदार्थोपबृंहणप्रसङ्गेषु विधिव्यवहारप्रवर्त्तनाय कल्पसूत्राण्याविष्कृतानि। यथा मन्त्रोच्चारेण सहैवोदात्तानुदात्तादिबोधकत्वेन हस्तसञ्चालनादिकं विधाय शब्दार्थानुसन्धानं च विधीयते, तथैव कल्पेष्वाश्रमसम्बन्धिनां कर्मणां विपुलेषु प्रसङ्गेषु वेदानां शाखानुसारं स्वतन्त्राः कल्पाः प्रकल्पिताः कल्पकैर्ऋषिभिः प्रागेव। क्रियाकाण्डदृष्ट्या श्रौत्रसूत्रेषु, धर्मसूत्रेषु, गृह्यसूत्रेषु च विभक्तानि कल्पसूत्राणि साम्प्रतमपि समुपलभ्यन्त इति तान्येव प्रमाणान्यत्र।

भगवता परशुरामेण प्रवर्त्तितमिदं कल्पसूत्रं सर्वाश्रमिणां कृते श्रीविद्योपासनया सर्वविधौत्कर्ष्यराशिसमृद्ध इति। यद्यप्यपराविद्याविभाग एव कल्पसूत्राणि परिगणितानि भवन्ति, किन्तु कल्पसूत्रमिदं पराविद्योपासना-प्रधानमित्यस्य महन्महत्त्वम्। दीक्षाविधिमारभ्य पराक्रमसाधनापर्यन्तं सर्वं तत्त्वव्रातं सम्यक् प्रतिपादितं दृश्यतेऽस्मिन् कल्पसूत्रे।

ग्रन्थस्यास्य महत्त्वं श्रीविद्याया आदिमग्रन्थत्वेनाङ्गीक्रियत एवान्यदप्येकं कारणमिदं यद् दुर्वाससा प्रवर्त्तितस्य वसिष्ठप्रतिपादितस्य च श्रीविद्यासाधनापद्धतेरत्र सामरस्यं स्वत एव समुल्लसितं दृश्यते। समग्रेऽस्मिन् विश्वप्रपञ्चे व्याप्तायाः पराशक्तेः समुपासनया जीवन्मुक्तिर्हस्तामलकवद् हस्तगता भविष्यत्येवेति समुद्घोषयति परशुरामकल्पसूत्रम्[२]।

त्रैपुरसिद्धान्तं प्रतिपादयता भगवता समुदीरितं यत् ''भगवान् परमशिवभट्टारकः श्रुत्याद्यष्टादशविद्याः सर्वाणि दर्शनानि लीलया तत्तदावस्थाऽऽपन्नः प्रणीय संविन्मय्या भगवत्या भैरव्या स्वात्माभिन्नया पृष्टः पञ्चभिर्मुखैः पञ्चाम्नायान् परमार्थसारभूतान् प्रणिनाय''।

१. मुण्डकोपनिषद्-१।१।४-५।
२. श्रीपरशुरामकल्पसूत्रम्, सर्वसाधारणक्रमः, सू.८२।

सूत्रेणानेन स्पष्टमेव समुदीर्यते यत् परमशिवभट्टारकः श्रुत्याद्यष्टादशविद्याः (श्रुतयः ४ + शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषं निरुक्तञ्चेति ६ + मीमांसा न्यायः पुराणं धर्मशास्त्रञ्चेति ४ + आयुर्वेदो धनुर्वेदो गान्धर्वं नीतिशास्त्रञ्चेति ४ = मिलित्वाऽष्टादशविद्या भवन्ति) तत्तदवस्थापन्नं प्रणिनाय। कल्पसूत्रमिदमपि तदनुसारं परशुरामरूपं स्वीकृत्य परमशिव एव स्वयं निर्मितवान्।

त्रैपुरसिद्धान्ते त्रिपुराविद्यायाः समुपासना प्रधानतया क्रियते। त्रिपुराविद्याया बालात्रिपुरसुन्दरी, महात्रिपुरसुन्दरी, महात्रिपुरभैरवीति त्रैरूप्येऽपि सामरस्यसाधनायाः प्राधान्यं सर्वैरङ्गीक्रियते। कामरूपप्रदेशे त्रिपुरभैरवी एव कामाख्यारूपेण राराजते। श्रीचक्रस्य नवमचक्रेश्वरी महात्रिपुरसुन्दरी महाभट्टारिका ललिताऽस्माकीनेऽपि 'हृदये ललितादेवी'ति रूपेण विराजते।

कल्पसूत्रानुसारं षट्त्रिंशत्तत्त्वानि विश्वम्, शरीरकञ्चुकितो जीवो निष्कञ्चुकः शिवः स्वविमर्शः पुरुषार्थः, सम्प्रदायविश्वासाभ्यां सर्वसिद्धिः, आनन्दं ब्रह्मणो रूपं, तच्च देहे व्यवस्थितमित्यादयः सिद्धान्ताः सर्वप्राथम्येन प्रतिपादिताः सन्ति। उपासकानां कृते केचित् प्रधाना धर्मा अपि निर्दिष्टाः, यथा—भावनादार्ढ्यादाज्ञासिद्धिः। सदा विद्यानुसंहतिः, सततं शिवतासमावेशः, सर्वत्र निष्परिग्रहता, फलं त्यक्त्वा कर्मकरणम्, आत्मलाभान्न परं विद्यत इत्यादयः। तेषु सततं शिवतासमावेशस्तु समुपासकानां कृते सञ्जीवकं सूत्रमिव सर्वथा ग्राह्यमेव।

दीक्षा त्रिविधा भवति—१. शाम्भवी, २. शास्त्री, ३. मान्त्री च। सर्वान् सिद्धान्तान् श्रावयित्वा दीक्षा दीयत इति। परशुरामकल्पसूत्रे मान्त्रीदीक्षाया एव प्राधान्यम्, सूत्रकारस्य तन्त्रदीक्षाया एव अभिमतत्वात्। अधिकारानुसारं च दीक्षा दीयते। तत्र मान्त्रीदीक्षया शिष्यं गुरुः स्वात्मस्वरूपमेव करोति। दीक्षानन्तरं शिष्यः स्वात्मपूर्णतां भावयित्वा कृतार्थो भवति[१]।

श्रीविद्यासाधकः आमूलमाब्रह्मविलं प्रज्वलन्तीं प्रकाशलहरीं सर्वदैवानुभवति। चिद्रश्मिभिस्तस्य सर्वे पातका निरस्ता भवन्ति। अत्र गुरोः परमशिव-

१. श्रीपरशुरामकल्पसूत्रम्-१।४३।

रूपतैव स्वीकृता वर्त्तते।[१] प्रातरुत्थायैव मूलादिविधिबिलपर्यन्तं तडित्कोटिकडाराया-स्तरुणदिवाकरपिञ्जराया मूलसंविदो ध्यानमनिवार्यत आवश्यकं भवति। पश्चाच्च पूजाक्रमे न्यासादिविधानं विधाय क्रमशो निर्देशानुसारं सर्वावरणादिपूजाः परिपूर्य परापूजायां प्रवृत्तेन भाव्यम्। सर्वभूतैरविरोधः प्रधानधर्म इति।[२]

स्वहितोपासकानां कृते केचिन्नियमा अवश्यं पालनीया इति सूत्रे निर्दिष्टम्। तद्यथा—न जुगुप्सेत सिद्धद्रव्याणि, न कुर्यात् स्त्रीषु निष्ठुरताम्, वीरस्त्रियं न गच्छेत्, नात्मेच्छया मपञ्चकमुररीकुर्यात्, कुलश्रेष्ठैः सह नासीत, न बहु प्रलपेतेत्यादिका एतादृशा एव धर्मास्सदैवाचरणीया इति।

दीक्षाविधिः, गणनायकपद्धतिः, श्रीक्रमः, ललिताक्रमः, ललितानवावरण-क्रमः, श्यामाक्रमः, वाराहीक्रमः, पराक्रमः, होमविधिः, सर्वसाधारणक्रम इति दशसु खण्डेषु प्रवर्त्तमानमेतत्सूत्रं 'सर्वतस्पृत्वा त्यतिष्ठद्दशाङ्गुलमि'ति सहस्रशीर्षत्वं स्वयमेव समाप्नोति।

ग्रन्थस्यास्य स्वनामधन्येन श्रीपण्डितकुलावतंसेन 'अमृतेशानन्दनाथ'-कृपापात्रेण सुब्रह्मण्यतनूद्भवेन श्रीमता रामेश्वरेण महाविदुषा विरचिता सौभाग्यसंवर्धिका महद्विस्तारप्रस्तारप्रसारिता व्यासवृत्त्या विरचिता सूत्रवृत्तिः स.रा. बडौदाविश्वविद्यालयत एव मुद्रापयित्वा १९४० ईसवीये वत्सर एव सुप्रकाशिता पुरा सम्प्रति दुर्लभ्यतां गता जाता। तया सहैव परशुरामकल्पसूत्रमपि मन्ये तस्यैव विश्वविद्यालयकालमञ्जूषायां निरुद्धमासीत्। साम्प्रतिके समये तस्योपलभ्यतां समनुभूय विद्वद्भिश्छायाप्रतिः कथमपि सम्प्राप्ता। वाराणस्यां श्रीविद्यासाधना-पीठसंस्थापकेन श्रीविद्यासाधकशिरोमणिना पद्मभूषणादिविविधविरुदावली-विभूषितेन प्रो.विद्यानिवासमिश्रमहोदयेन समादिष्टोऽहं श्रीपरशुरामकल्पसूत्रस्य पुनः प्रकाशनार्थं पाण्डुलिपिलेखनायेति; किन्तु कार्येऽस्मिन् द्विधा विषमता समक्षमापतितासीत्।

१. श्रीरामेश्वरवृत्तिः व्यासवृत्त्या लिखिता सर्वजनसुलभतां नैवादधाति।

२. तस्याः सम्पूर्णतया प्रकाशनेनापि महर्घतया बहुमूल्यत्वेनापि कल्पसूत्रमिदं पुस्तकालयानामेव शोभासंवर्द्धनं करिष्यतीति।

---

१. श्रीपरशुरामकल्पसूत्रम्, श्रीक्रमः-२।

२. तदेव, सर्वसाधारणक्रमः-५७।

मध्यविकासाच्चिदानन्दलाभ इति सूत्रदृष्टिं स्वीकृत्यैको निर्णय एवं कृतो यत् श्रीरामेश्वरवृत्तेर्मुख्यांश एव सूत्रैः सह समायोज्य प्रकाशयितव्य एष ग्रन्थ इति। येन सूत्रार्थानां तद्दृष्ट्याऽर्थस्फोरणमपि भवतु, प्रकाशनेऽपि सौविध्यं भवतु, ग्रन्थविस्तरेणापि ग्रन्थमभिरक्ष्य स्वल्पमूल्यतया सर्वजनसुलभत्वमपि सुनिश्चितं भवतु।

कार्येऽस्मिन् योजनिकया शक्त्या नियुक्तो नीरक्षीरविवेकभाषाभाष्यार्थमपि समादिष्टोऽयं जनः तत्सर्वथा व्यदधात्। समासवृत्तिस्वीकरणेन ग्रन्थस्य स्वल्पकायत्वमल्पमूल्यत्वं सर्वजनसौलभ्यञ्च व्यवस्थापयिष्यत इति सुस्पष्टमेव।

अत्र न कापि विप्रतिपत्तिः। बहूनां ग्रन्थानां सङ्क्षिप्तं संस्करणमद्यत्वे युगे सुप्रचलितमेव। येषां हृदि सर्ववृत्तिस्वाध्यायसमीहा समुपजायेत, तदर्थं पुनः सम्पूर्णसद्वृत्तिप्रकाशनं भवत्विति शोभनमेव तद्भविष्यति। मया तु प्रत्येकं सूत्रमनुसृत्य श्रीरामेश्वरवृत्तेर्मुख्यांशमात्रमेव समुल्लिखितं येन सूत्रार्थे कश्चिदनर्थो मा पतेदिति हिन्दीभाषायां च यथासामर्थ्यमर्थप्रकाशनं कृतमित्यत्र त्रिपुरसुन्दरी मदाराध्यैव प्रसीदतीति समनुभूयते।

मयि स्वात्मविमर्शे स्पन्द्यते कयाचिदर्थात्मिकया वृत्त्या यत् स्वर्गवातायनतः सम्पश्यन्निदं प्रकाशनं माम् आदेष्टारं प्रकाशननिदेशकञ्चाक्षमिष्ट रामेश्वरवरेण्येन विद्वद्वरेण्येन इति सम्यगनुभूयते च। यदा मूललेखकेन क्षान्तमिदं सुकृत्यं तर्हि केषाञ्चिदन्येषां मनसि का स्याद्विप्रतिपत्तिरिति सर्वविद्वज्जनान् प्रति स्वकीयं वशंवदत्वं निवेदयामि सोऽहं परमाचार्यः परमहंस इति।

परशुरामकल्पसूत्रं भगवतः परशुरामस्य कृतिरित्यत्र नास्ति संशीतिलेशः; किन्तु येन प्रकारेण रामेश्वरसूत्रवृत्तिसमन्विते पुराग्रन्थे कृतेरस्याः कर्तृत्वं समुपवर्णितम्, ग्रन्थान्ते च ग्रन्थकृत्प्रशंसासन्दर्भे समुपवर्णितं तन्नैव मह्यं रोचते। तत्र काचित्सङ्कीर्णता प्रदर्शितेति प्रतीयते। तत्र लिखितमस्ति यत्—

"श्रीदुष्टक्षत्रियकुलकालान्तकरेणुकागर्भसम्भूतमहाकुलाचार्यमहादेवप्रधानशिष्य-जामदग्न्यपरशुरामभार्गवमहोपाध्यायनिर्मितं कल्पसूत्रं सम्पूर्णम्[१]।"

---

१. गायकवाड ओरियण्टल सिरीज (द्वितीयावृत्तिः) महाराजसियाजीराव यूनिवर्सिटी, बड़ौदा, पृ० ३०७।

अस्मिन् परिचयात्मके सन्दर्भे भगवतः परशुरामस्य कल्पसूत्रनिर्मातृमहत्त्वं विस्मृत्य हेयं पौराणिकं दुष्टक्षत्रियकुलकालान्तकत्ववर्णनं तस्य प्रतिष्ठां खण्डयति। श्रीविद्यासमुपासनाप्रसङ्गे तस्य कालान्तकत्वख्यापनं प्रकरणविपरीतं शिष्टाचारविरुद्धं च प्रतिभाति। मयाऽस्मिन् नैव सा प्रणाली अङ्गीकृता।

रेणुकागर्भसम्भूतत्वमपि तस्य मातृहन्तृत्वस्मारकमिति तदपि नैव दातव्यमिति मे विचारः। एतादृशैर्विशेषणैः कोऽपि विभूषितव्य इति। कोऽपि कृतिकार ईदृशैर्विशेषणैः स्वात्मानं नैव ख्यापयितुं समीहते, केनचिदन्येन प्रक्षिप्तोऽयमंश इति प्रतिभाति। तत्र विद्वांस एव प्रमाणमिति शम्।



# तन्त्रोक्तस्य श्रीचक्रस्य वैदिकत्वविमर्शः

**डॉ.बृजेशकुमारशुक्लः**
प्राध्यापकः, संस्कृतविभागस्य
लखनऊ-विश्वविद्यालये, लखनऊ



'वेदे सर्वं प्रतिष्ठितम्' इति वचनप्रामाण्यादत्र तन्त्रोक्तस्य श्रीचक्रस्य वैदिकाधारत्वप्रमाणीकरणाय वेदादिभ्य उद्धृतवचनैस्तन्त्रोल्लिखितान्तःसाक्ष्य-प्रमाणैस्तद्विमर्शो विधीयते। निखिलतन्त्रपरम्परायां शाक्ततन्त्रेषु भगवत्यास्त्रिपुर-सुन्दर्याः पूजा बहुप्रसिद्धा वरीवर्त्ति। तान्त्रिकपूजायां चक्रमण्डलार्चनाया वैशिष्ट्यात्त्रिपुरसुन्दर्याश्चक्रमपि स्वमहत्तामुद्वहति। एतत्त्रिपुरसुन्दरीचक्रमेव 'श्रीचक्रम्' 'श्रीयन्त्रम्' चेत्यादिविविधनामभिरभिधीयते। यद्यपि तन्त्रेष्वागमप्रामाण्यं बहुधा मन्यते, तथापि सर्वजनश्रद्धाजुषो वेदास्तन्त्रेषु प्रतितिष्ठन्त इति नात्र सन्देहावकाशत्वम्। वेदतन्त्रयोरुभयोरप्यादानप्रदानत्वद्वारेण परस्परं सहकारित्वं किञ्चिद् दरीदृश्यते। कालक्रमेण वेदेऽपि तन्त्रविषयाः सन्निविष्टास्तेषां लोकप्रियत्वात्। एवमेव तन्त्रविषयेषु वैदिककर्मकाण्डानां प्रयोगदर्शनात्तेषां मूलत्वं कुतः समुपागतमिति निश्चेतुं न शक्यते। श्रीचक्रस्य विषयेऽपि समस्यैषा बोभूयते यदेतन्महत्त्वपूर्णं चक्रं किं वेदतस्तन्त्रेषु समुपागतं किं वा तन्त्र एवाऽस्य मूलं प्रतितिष्ठते। श्रीचक्रविषये यदाऽन्वेषणं क्रियते तर्ह्येतत्सर्वं स्पष्टतयाऽवगम्यते यत्तन्त्रोक्तं श्रीचक्रं मूलतो वैदिकमेवास्ति। 'चक्र'शब्दस्यर्ग्वेदे[1] बहुत्रोल्लेखोऽधिगम्यते। ऋग्वेद एकस्मिन्मन्त्रे प्रोक्तं यद् हे अश्विनीकुमारौ! अद्य युवां नवसङ्ख्यया त्रिगुणिताभिः सप्तविंशतिरेखाभिरस्माकं भवतं युवयोरर्थस्य कामस्येच्छाशक्तेर्दानस्य च सर्वत्र व्यापनशीलत्वात्। युवयोः सप्तविंशतिरेखात्मकं यन्त्रं शीतकाले वस्त्रमिव मनीषिभिः सहजतयाऽवाप्यते—

**'त्रिश्चिन् नो अद्या भवतं न वेदसा विभुर्वां याम उत रातिरश्विना ।**
**युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः[2]' ॥**

---

१. ऋग्वेदे-१।१५५।६, १।१६४।११,१२,१३,१०।८५।१६ इत्यादिषु।
२. तत्रैव-१।३४।१।

श्रीचक्रे नवत्रिकोणसम्मेलनं क्रियते, तस्मान्नवत्रिकोणेषु प्रयुक्ताभिः सप्तविंशतिरेखाभिः श्रीचक्रस्य रचना भवति। 'युवो'रिति द्विवचनप्रयोगेण 'शिवा-शिवयो'रित्यपि प्रतीकत्वेनाऽत्र ज्ञातुं शक्यते तत्तादात्म्यस्वरूपं श्रीचक्रस्य शिवयोः शरीररूपत्वात्। यथोक्तम्—

'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः'[१]।।

एतदेवाऽवोचि सौन्दर्यलहर्यामपि[२] श्रीशङ्कराचार्येण। अधुना जिज्ञासा भवति यच्छ्रीचक्रस्य कीदृशं स्वरूपं निगदितमिति? तदुच्यते यद् बिन्दुत्रिकोणाष्टकोण-दशारयुग्मचतुर्दशाराष्टदलषोडशदलमेखलात्रयभूपुरत्रयात्मकं श्रीचक्रं श्रीत्रिपुरसुन्दर्या मन्दिरं पुरं वा कथ्यते। भूपुरे चैतस्मिंश्चत्वारि द्वाराणि चतुर्दिक्षु राराज्यन्ते—

बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंयुतषोडशारम्।
वृत्तत्रिभूपुरयुतं परितश्चतुर्द्वाः श्रीचक्रमेतदुदितं परदेवतायाः[३]।।

अत्र श्रीचक्रे त्रिकोणाष्टकोणदशकोणद्वयचतुर्दशाराख्यानि पञ्च शक्ति-चक्राणि, बिन्दुवसुपद्मदलषोडशपद्मदलचतुरस्रभूपुराणि चत्वारि शिवचक्राणि चाऽभिधीयन्ते[४]। ऋग्वेदेऽपि प्रोक्तं यत् पञ्चारचक्रे सर्वाणि भुवनानि तेष्ठीयाम्बभूवुः—

**'पञ्चा॑रे च॒क्रे प॑रि॒वर्त॑मा॒ने तस्मि॒न्ना त॑स्थु॒र्भुव॑नानि॒ विश्वा॑'**[५]॥

एवमेव शिवस्य चतुर्णां चक्राणां विषयेऽप्युक्तम्—

**चत्वार॑ ईं बिभ्रति क्षेम॒यन्त॑ः**[६]।

अत्र 'ईं'शब्दः कामकलारूपं बिन्दुं स्फुटयति—'ईंशब्दः कामकलावाचकः'[७] इत्युक्तत्वात्। एवं वेदे पञ्चचक्राणां चतुर्णां चक्राणां च प्रतीकत्वेनोल्लेखो

---

१. सौन्दर्यलहर्याम्-९, लक्ष्मीधराटीकायाम्, पृ० ९१ (भैरवयामलवचनम्)।
२. तत्रैव-११।
३. तत्रैव-११, लक्ष्मीधराटीकायाम्, पृ० ८१।
४. त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च।। बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्। चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात्।। (सौन्दर्यलहर्याम्-९,लक्ष्मीधरटीका, पृ. ७१)
५. ऋग्वेदे-१।१६४।१३।
६. तत्रैव-५।४७।४।
७. त्रिपुरामहिमस्तोत्रे-१, नित्यानन्दकृतटीकायां (काव्यमाला-११), पृ० ३।

विहितः। एतान्येव श्रीचक्रे निहितानि नवचक्राणि भवितुमर्हन्ति। श्रीचक्रेऽधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि, ऊर्ध्वमुखानि पञ्चत्रिकोणानि च शक्तिमयानीत्युच्यन्ते। एतस्मिन् सन्दर्भे श्रीशङ्कराचार्येण सौन्दर्यलहर्यामप्यभ्यधायि यच्चतुर्भिः शिवचक्रैः पञ्चभिः शक्तिचक्रैः पृथक्त्वेन वर्तमानैरपि शिवशक्तिचक्रमध्ये बिन्दुस्थानस्य विद्यमानत्वात्प्रपञ्चस्य मूलकारणैर्नवभी रचित-त्रिकोणाष्टकोणदशारयुग्मचतुर्दशाराणां त्रिचत्वारिंशत्कोणा अष्टदलषोडशदलवृत्तत्रय-चतुर्द्वारोपनिबद्धभूपुरत्रयैः साकं भगवत्यास्त्रिपुरसुन्दर्याः शरणकोणा मन्दिरप्रकोष्ठा निर्मिताः। एतदेव श्रीचक्रमुच्यते। यथोक्तम्—

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः।
त्रयश्चत्वारिंशद्वसुदलकलास्रत्रिवलय-
त्रिरेखाभिः सार्द्धं तव शरणकोणाः परिणताः[1]।।

आथर्वणश्रुतौ सौभाग्यकाण्डे सम्प्राप्तायां त्रिपुरोपनिषदि नवयोनिभिर्निर्मितस्य श्रीचक्रस्योल्लेखः समुपलभ्यते। तत्रोक्तं यत्सा सुन्दरी नवयोनिं नवचक्राणि नवयोगान् नवयोगिनीश्च धारयति। एषा देवी नवचक्रभूमीनां नवभद्राणां नवमुद्राणां चाधीश्वरी समेषां कल्याणाय बोभवीति। सा संसारस्य कारणभूतैकरूपा चास्ति। एकरूपत्वमासाद्य सा त्रिपुरसुन्दरी बिन्दुचक्ररूपा नवयोन्यात्मिका बभूव। नव-योनिभिर्नवत्रिकोणैर्वा सह दशारं संयोज्य सोनविंशात्मिका सञ्जाता। ततः पुनश्च दशारं संयोज्योनत्रिंशत्कोणात्मिका साऽभवत्। ततश्चतुर्दशारं संयोज्य सा त्रिचत्वारिंशात्मिका बोभूयाम्बभूव। एत एव त्रिचत्वारिंशच्छरणकोणाः श्रीचक्रे वर्तन्ते। एषा त्रिपुरसुन्दरी त्रिचत्वारिंशत्समिद्रूपाणि तेजांसि कामयमाना मातेव मम शरीरं प्रविशतु—

"नवयोनिं नवचक्राणि दीधिरे नवैव योगा नवयोगिन्यश्च।
नवानां चक्रा अधिनाथाः स्योना नवभद्रा नवमुद्रा महीनाम्।।
एका सा आसीत्प्रथमा सा नवासीदा सोनविंशदा सोनत्रिंशत्।
चत्वारिंशादथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु"[2]।।

सौन्दर्यलहर्यामुपर्युक्तपद्ये क्वचिच्चतुश्चत्वारिंशदित्यपि पाठ उपलभ्यते। तत्र बिन्दुत्रिकोणाऽष्टकोणदशारद्वयचतुर्दशारयोगेन सङ्ख्यापूर्तिर्भवितुमर्हति। त्रिपुरा-महिमस्तोत्रे श्रीचक्रं वेदस्य मूलकोशत्वेन व्याख्यातम्—

---

१. सौन्दर्यलहर्याम्, श्लोकः-११; २. त्रिपुरोपनिषदि-२,३ मन्त्रौ।

"श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकम्"[१]।

श्लोकस्यास्य टीकायां टीकाकारेणावोचि—"श्रीचक्रं महात्रिपुरसुन्दर्याः पूजाचक्रम्। श्रुतिमूलकोशः श्रुतीनां वेदानां मूलं प्रणवः। 'ओङ्कारप्रभवा वेदाः' इति वचनात्। तस्य कोशभूतं श्रीचक्रगतमध्यत्रिकोणं तस्य कामकलाक्षरगतबिन्दुत्रयमयत्वात्। बिन्दुत्रयाणां ब्रह्मविष्णुरुद्ररूपत्वात्"[२]।

अनेनास्य श्रीचक्रस्य वैदिकत्वं प्रमाणितम्। ललितासहस्रनामभाष्ये श्रीभास्कररायेण सनत्कुमारतन्त्रस्थं वचनमुद्धृत्य प्रत्यपादि यत्पृश्नयो नामधेया मुनयः श्रीविद्याया उपासनां चक्रुस्तैरेषा विद्या समुपदिष्टा च। एवमत्रोक्तम्—

पृश्नयो नाम मुनयः श्रीविद्योपासका मिथः।
सम्भूयोपदिशन्त्येतामुत्थापयत मा चिरम्[३]।।

सौन्दर्यलहर्या लक्ष्मीधराटीकायामपि रुद्रयामलतन्त्रगतं वचनमुपलभ्यते यत् पृश्निनामधेया मुनयः सर्वपूजितां श्रीचक्रविद्यां श्रीचक्रं समाश्रित्य सेवयामासुः—

पृश्नयो नाम मुनयः सर्वे चक्रसमाश्रयाः।
सेवमानाश्चक्रविद्यां देवगन्धर्वपूजिताम्[४]।।

**एते पृश्निनामधेया मुनयो वैदिका आसन्। तैत्तिरीयारण्यके 'इमा नुकं भुवना सीषधेमष इत्यारभ्य "ऋषिभिरदात्पृश्निभिः" इति पर्यन्तं पृश्निमुनिभिः श्रीचक्रसाधनं तत्स्वरूपं च प्रतीकत्वेन व्याख्यायि। तत्र पृश्निभिर्ऋषिभिः श्रीचक्रस्य स्वरूपमेवमदाश–**

**अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।**
**तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः[७]॥**

श्रीचक्रे मुख्यतयाऽष्टकोणदशकोणयुग्मचतुर्दशकोणाष्टदलषोडशदलत्रिवलयत्रिरेखात्मकान्यष्टौ चक्राणि दरीदृश्यन्ते। अत्र बिन्दुस्त्रिकोणे त्रिकोणश्चाष्ट-

१. त्रिपुरामहिमस्तोत्रे, श्लोकः-२८।
२. त्रिपुरामहिमस्तोत्रे-२८, नित्यानन्दकृतटीकायाम् (काव्यमाला-११) पृ. २३।
३. ललितासहस्रनामभाष्ये-९१, पृ. ५६।
४. सौन्दर्यलहर्याम्-११, लक्ष्मीधराटीकायाम्, पृ. ८४ (रुद्रयामलवचनम्)।
५. तैत्तिरीयारण्यके-१।२७।
६. तत्रैव-१।२७।
७. तैत्तिरीयारण्यके-१।२७, अथर्ववेदे-१०।२।३१ (किञ्चित्पाठभेदेन सह)।

कोणे श्लिष्टं मन्यते। अपि च श्रीयन्त्रे त्रिकोणरूपाणि नवसङ्ख्यकानि द्वाराणि भवन्त्येव। एतस्यां पुरि श्रीचक्रमध्ये हिरण्मयः कोशस्त्रिकोणस्थबिन्दुरूपः सहस्रदलकोशो विद्यते, हिरण्मयस्य बिन्दुप्रतीकत्वात्। यथोक्तमाथर्वणे—"हिरण्मयो बिन्दुः"[१]। एष कोशः स्वर्ग एव ज्योतिषा त्रिपुरसुन्दरीतेजसा सर्वत आवृतोऽस्ति। एतस्मिन् हिरण्मये बिन्दुरूपे कोशे त्रिप्रतिष्ठितस्त्रिकोणो वर्तते यस्मिन्नात्मवान् यक्षः श्रीसुन्दरीस्थानं विराजतेतराम्, तत् स्थानं वेदविदो जानन्ति—

**तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।**
**तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः**[२] ॥

अथर्ववेदे संक्षिप्ततया श्रीचक्रस्य स्वरूपमुक्तं यत् षोडशाष्टपुण्डरीकात्मकं नवद्वारयुतं श्रीचक्रं त्रिवलयत्रिरेखाभिरावृतमस्ति। एतस्मिन् यदात्मवद्यक्षरूपं त्रिपुरसुन्दर्याः पदं वरीवर्ति, तत्पदं ब्रह्मविदो वेदज्ञा अवगच्छन्ति—

**पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्।**
**तस्मिन् यद्यक्षमात्मचत्तद्वै ब्रह्मविदो विदुः**[३] ॥

अष्टचक्रा पुरी श्रीचक्रे प्रतिष्ठिता। एषा पुरी पुर्यष्टकमिति नाम्ना कामकलाविलासे निगदिता—"पुर्यष्टकमेवेदं चक्रतनोः संविदात्मनो देव्याः"।[४] दार्शनिकशब्दावल्यां पुर्यष्टकं सूक्ष्मशरीरमेव भवितुमर्हति।[५] श्रीचक्रं शरीरविज्ञानमेवेत्यस्य भिन्नविषयत्वादलं प्रपञ्चितेन। शरीरे यथा मूलाधारादारभ्य सहस्रारचक्रं यावच्चक्राणि समाविष्टानि, तथैव श्रीचक्रेऽपि ज्ञातव्यमिति। वैदिकी श्रीचक्रोपासना सौन्दर्यलहर्या लक्ष्मीधराटीकायां[६] विशदतयाऽऽम्नाता।

यजुर्वेदे श्रीचक्रसाधनायाः फलमभिहितं यत् षोडशीस्तोम ओजसा समं द्रविणं प्रददाति तथा च चतुश्चत्वारिंशः स्तोमो वर्चसा समं द्रविणं प्रयच्छति। तद्यथा—"**षोडशी स्तोम ओजो द्रविणं चतुश्चत्वारिंशं स्तोमो वर्चो द्रविणम्**"। सौन्दर्यलहर्या अरुणामोदिनीटीकाकारेण लक्ष्मीधराटीकाकारेण च

---

१. अथर्ववेदे-९।१।२१।
२. तत्रैव-१०।२।३२; ३. तत्रैव-१०।८।४३।
४. कामकलाविलासे-४० श्लोके।
५. चितिश्चित्तं च चैतन्यं चेतनाद्वयमेव च। जीवः कलाशरीरं च सूक्ष्मं पुर्यष्टकं भवेत्।। (कामकलाविलासे-४०, चिद्वल्ल्यां टीकायाम्, पृ. ६०)
६. सौन्दर्यलहर्याः लक्ष्मीधराटीकायाम्, पृ. ८४-९१।
७. यजुर्वेदे-१५।३।

रुद्रयामलतन्त्रोद्धृतश्लोकैरुदलेखि यच्छ्रीचक्रं सोमसूर्यानलात्मकमस्ति, तस्य पुरत्रयात्मकत्वात्। एतस्मिंश्चक्रे सदाशिवः सततं वसति—

पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम्।
महालक्ष्म्या पुरं चक्रं तत्रैवास्ते सदाशिवः[१]।।

अपि चाभ्यधायि सौभाग्यवर्द्धिनीकारेण—"सर्वतेजोमयं दिव्यं सोमसूर्यानलात्मकम्"[२]।। ऋग्वेदेऽप्युक्तं यत् सूर्यचन्द्रात्मकं द्वे चक्रे स्तः। तृतीयमग्निरूपं चक्रं गुप्तं वर्तते तद् विद्वांस एव जानन्ति नापरे—

**द्वे तें चक्रे सूर्ये ब्रह्माणं ऋतुथा विदुः।**
**अथैकं चक्रं यद् गुहा तदद्धातय इदुं विदुः।।**[३]

अत्र कथं सूर्यचन्द्रानलरूपत्वं श्रीचक्रे भवितुं शक्यत इत्यत्र षोडशकलाभिः सार्द्धं सप्तविंशतिनक्षत्राणि त्रिचत्वारिंशत्कोणान् व्युत्पादयन्ति, तदेव सोमरूपत्वम्। द्वादशकला द्वादशमूर्त्तयो द्वादशराशयो वेदत्रयी उदात्तादिस्वरास्तेन त्रिचत्वारिंशत्कोणा इति सूर्यरूपत्वमुच्यते। मध्यत्रिकोणः साक्षात्स्फुरद्-रूपबिन्दुचक्रतेजः, अष्टकोणरूपा जातवेदसप्तजिह्वहव्यवाहनकौमारतेजोऽश्वोदरजो वैश्वानरो विश्वमुख्यदेवमुखा इत्याख्या अष्टौ मूर्त्तयः, दशकला विराट्-स्वराट्सम्राडभिभूसुभूविभुप्रभ्वीप्रभूतिशिवाविभूत्याख्याः, दशविभूतयः सात्त्विकराज-सतामसजिह्वात्मना चतुर्दशत्वमनुप्राप्य त्रिचत्वारिंशत्कोणत्वमेव वह्निरूपत्वं भवितुमर्हति।[४] एतस्मिन् सन्दर्भे सौन्दर्यलहर्याः सौभाग्यवर्द्धिनीकृताऽन्यानि श्रुतिप्रमाणानि सम्यक्तया व्याख्यायिषत,[५] तानि च विस्तरभयादत्र नोदितानि।

त्रिपुरोपनिषद एकस्मिन् मन्त्रे श्रीविद्याया मूलविद्या (मन्त्रः) निगदिता, यथोक्तम्—

कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः।
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या[६]।।

---

१. सौन्दर्यलहर्याम्-११, लक्ष्मीधराटीकायाम्, पृ. ८४, अरुणामोदिनीटीकायाम्, पृ. ८३।
२. आनन्दलहर्याम्-११, सौभाग्यवर्द्धिनीटीकायाम्, पृ. २०।
३. ऋग्वेदे १०।८५।१६।
४. आनन्दलहर्याम्-११, सौभाग्यवर्द्धिनीटीकायाम्, पृ.२०, सौन्दर्यलहर्याम्-११, अरुणामोदिनीटीकायाम्, पृ.९३।
५. आनन्दलहर्याम्-११, सौभाग्यवर्द्धिनीटीकायाम्, पृ. २०-२१।
६. त्रिपुरोपनिषदि-८।

अयं मन्त्रः कामकलाविलासस्य चिद्वल्लीटीकायां[१] साङ्ख्यायन-शाखान्तर्गतर्ग्वेदात्समुद्धृत इति कथितम्; परन्तु तच्छाखाया अनुपलब्धेर्मन्त्रोऽयं त्रिपुरोपनिषदि प्राप्यते। अत्र कामः ककारः, योनिः एकारः, कमला ईकारः, वज्रपाणिः लकारः, गुहा ह्रीङ्कारः, हसः हसकारौ, मातरिश्वा ककारः, अभ्रः हकारः, इन्द्रः लकारः, गुहा ह्रीङ्कारः, सकला सकलकाराः, माया ह्रीङ्कारश्च विश्वमातरमादिविद्यां पुरूचीं त्रिपुरसुन्दरीं पञ्चदशाक्षरीं प्रकटयन्ति। पञ्च-दशाक्षरीमन्त्रे स्थितैः ल स ह ई प र कार्द्धमात्राबिन्दुभिर्नवार्णैः श्रीचक्रं विरच्यते। ह्रीङ्कारेणात्र हकाररेफार्द्धमात्राबिन्दवो बोद्धव्याः। ज्ञानार्णवतन्त्रे प्रोक्तमिदं यल्लकारस्य पृथिवीबीजत्वाद् भूपुरं सकारे षोडशकलात्मकस्य चन्द्रस्य बीजरूपत्वात्षोडशदलं हकारस्याष्टमूर्त्तेः शिवस्य बीजत्वादष्टदलम्, ईकारस्य चतुर्दशभुवनरूपत्वाच्चतुर्दशारम्, एकारस्य विष्णुयोनित्वाद् दशारं रेफस्याऽव्ययज्योतिस्त्वाद् दशकलात्मकाग्निरूपं दशारं ककारस्याऽष्टमूर्त्तेः शिवरूपस्य मदनस्य स्वरूपत्वादष्टारमर्धमात्राया नादरूपत्वाद् विश्वयोनिरूपं त्रिकोणं बिन्दोः कामेश्वररूपत्वाद् विश्वाधारं बैन्दवं चोत्पद्यते[२]।

एवमत्र मन्त्रदेवताचक्राणामेकरूपत्वं प्रतिपादितं तत्सर्वं वैदिकमिति वक्तुं शक्यते। श्रीचक्रं प्रकारान्तरेण चिन्तामणिगृहमित्यप्युच्यते। सौन्दर्यलहर्यां पद्यमेतदुक्तम्—

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्[३]।।

---

१. कामकलाविलासे-११, चिद्वल्लीटीकायाम्, पृ.३०।

२. लकारः पृथिवीबीजं तेन भूबिम्बमुच्यते। सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकः।।
तस्मात्षोडशपत्रं तु हकारः शिव उच्यते। अष्टमूर्तिः सदा भद्रे तस्माद्वसुदलं भवेत्।।
ईकारस्तु महामाया भुवनानि चतुर्दश। चालयन्ती परा तस्माच्छक्रकोणं भवेत्प्रिये।।
शक्तिरेकादशस्थाने स्थित्वा सूते जगत्त्रयम्। विश्वयोनिरिति ख्याता सा विष्णुर्दशरूपकम्।।
एकारात्परमेशानि चक्रं व्याप्य विजृम्भते। दशकोणकरी यस्माद् रकारो ज्योतिरव्ययः।।
कलादशान्वितो वह्निर्दशकोणप्रकारकः। ककारान्मदनो देवि शिवश्चाष्टस्वरूपकः।।
योनिवश्यं तदा चक्रे वसुयोन्याङ्कितं भवेत्। अर्द्धमात्रागुणान् सूते नादरूपा यतस्ततः।।
त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत्। कामेश्वरस्य रूपं तु विश्वाधारस्वरूपकम्।।
श्रीचक्रं तु वरारोहे श्रीविद्यावर्णसम्भवम्।। (ज्ञानार्णवतन्त्रे-१०।४०-४८)

३. सौन्दर्यलहर्याम्-८।

अत्र त्रिपुरायाः सूक्ष्मस्वरूपमुक्तं तच्च श्रीचक्रे प्रतितिष्ठते। श्रीचक्रमध्यत्रिकोणस्थबैन्दवं स्थानमेव सुधासिन्धुरस्ति, पञ्चशक्तित्रिकोणा एव सुरवृक्षास्तत्रैव कदम्बवृक्षपङ्क्तिर्विद्यते। एतस्मिन्मध्ये मणिमण्डपे चिन्तामणिगृहं ह्रीङ्काररूपमनुत्तमं राराज्यते। यथा लक्ष्मीधराटीकायामुक्तम्—

बिन्दुस्थानं सुधासिन्धुः पञ्च योन्यः सुरद्रुमाः।
तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्डपम्।।
तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम्[१]।।

ललितासहस्रनामभाष्ये श्रीभास्कररायेण प्रत्यपादि यच्चिन्तामणिगृहस्य चत्वारि द्वाराणि चतुर्वेदरूपत्वेन प्रतिष्ठितानि। वेदज्ञानं विना चिन्तामणिगृहे कोऽपि प्रवेष्टुमेव न क्षमः, कुतस्तत्रस्थदेवतासाक्षात्कारं विधातुं प्रभवति। यथोक्तम्—"यद्वा चिन्तामणिगृहस्य चत्वारि द्वाराणि चतुर्वेदरूपाणि। द्वारप्रवेशमन्तरेण देवतादर्शनाभावाद्वेदैकवेद्यत्वम्। तथा च श्रुतिः—'ऋचां प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषामपाराम्। आथर्वणामङ्गिरसां प्रतीची साम्नामुदीची महती दिगुच्यते'। शुद्धविद्यादिभिः सौभाग्यादिभिर्लोपामुद्रादिभिस्तुरीयाम्बादिभिश्चार्ग्य-जुषाथर्वसामदेवतादिभिर्वेद्येत्यप्यर्थः"[२]।

तैत्तिरीयारण्यकेऽपि प्रतीकत्वेन चिन्तामणिगृहस्य वर्णनमेवं विहितम्—

**"यो वै तां ब्रह्मणो वेद। अमृतेनावृतां पुरीम्"[३]।**

अत्राऽमृतेनाऽऽवृतां पुरीमित्युक्त्या श्रीचक्रस्य बैन्दवस्थाने सुधयाऽऽवृतं चिन्तामणिगृहं ज्ञायते। श्रीचक्रस्य मध्यत्रिकोणस्थबैन्दवं पीयूषनिर्झरं सहस्रारचक्रमेवास्ति श्रीचक्रे मूलाधारादिनिखिलचक्राणां प्रतीकत्वेन विद्यमानत्वात्। एष विषयोऽत्र विस्तरभिया न व्याख्यातः। त्रिपुराया गृहं चिन्तामणिसञ्ज्ञं वेदे 'सरघा' इति नाम्ना प्रख्यापितम्—**'इयं वाव सरघा। तस्या अग्निरेव सारघं मधु'**[४]। अस्य व्याख्या सौन्दर्यलहर्या लक्ष्मीधराटीकायां[५] प्रोक्ता यच्छ्रीचक्रात्मकममृतनिर्झरं सरघात्वरूपम्। एतस्याः सरघाया अग्निर्बिन्दुस्थानं त्रिकोणरूपमेव सरघोत्पन्नं मधु, तदेव सुधासिन्धुरूपत्वेनात्र निगद्यते। मूलाधारचक्रादुत्थितां कुण्डलिनी शक्तिः सुधासिन्धुरूपे सहस्रारचक्रे प्रविश्य शिवेन

१. सौन्दर्यलहर्याम्-८, लक्ष्मीधराटीकायाम्, पृ. ६७।
२. ललितासहस्रनामभाष्ये, पृ. ४० (बम्बई-१९३५)।
३. तैत्तिरीयारण्यके-१।२७; ४. तैत्तिरीयब्राह्मणे-३।१०।१०।
५. सौन्दर्यलहर्याम्-३२, लक्ष्मीधराटीकायाम्, पृ. १५१।

सह मिलति। एषाऽवस्था तन्त्रे सिद्धिं प्रददाति। यथा त्रिपुराया गृहं चिन्तामणिसञ्ज्ञं तथैव एतन्नामधेयं श्रीसुन्दर्या मन्त्रो विद्यते। श्रीहर्षेण 'तच्चिन्तामणिमन्त्र-चिन्तनफले'[१] इत्युक्त्वा श्रीचक्रमध्यत्रिकोणस्थबैन्दवस्य ध्यानमकारि। नैषधीयचरिते[२] चिन्तामणिमन्त्रोऽपि कथितः। उभयतः प्रणववेष्टितो ह्रीङ्कार एव चिन्तामणिमन्त्रो भवितुमर्हति। यथोक्तम्—

शिवान्त्यो वह्निसंयुक्तो ब्रह्मद्वितयमन्तरा।
तुरीयस्वरशीतांशुरेखातारासमन्वितः।।
एष चिन्तामणिर्नाम मन्त्रः सर्वार्थसाधकः[३]।।

एतस्य चिन्तामणिमन्त्रस्य साधनां श्रीहर्षश्चकार। अनेन ज्ञातुं शक्यते यत् तेन श्रीचक्रोपासनां विधाय विलक्षणा कवित्वप्रतिभाऽवापि।

वस्तुतो ब्रह्माण्डपिण्डयोरेकीकाररूपं श्रीचक्रं मूलाधारतः सहस्त्रारचक्रपर्यन्तं साधनास्वरूपं विद्यते। अत्र श्रीचक्रे शरीरगतानां षट्चक्राणां कल्पनेत्थं करणीया— त्रिकोणे मूलाधारमष्टकोणे स्वाधिष्ठानं दशारे मणिपूरं दशारेऽनाहतं चतुर्दशारे विशुद्धं भूपुर आज्ञाचक्रमिति षट्चक्राणि निगदितानि—

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात्।।
मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम्।
अनाहतं विशुद्धाख्यमाज्ञाचक्रं विदुर्बुधाः[४]।।

ततश्च तत्र षट्चक्राण्येव सुधासिन्धुरूपत्वेन परिकल्पन्ते। एतदेव चन्द्र-मण्डलं यस्मात्सुधा सततं स्त्रवति। अत्रैवोपासकैः शक्तिशिवयोर्विहारा दरीदृश्यते—

"इत्यागमादुक्तचक्रषट्कमेव सुधासिन्धुरिति तदेव चन्द्रमण्डलम्। तत्रैव शिवयोर्विहारश्चेति रहस्यम्"[५]। षट्चक्रैः सार्द्धं सहस्त्रारचक्रमपि बिन्दुस्थाने विराजतेतराम्। इत्थं चक्राणां सङ्ख्या सप्त भवति। ऋग्वेदेऽपि निगदितं यत् सप्तचक्रात्मके श्रीचक्रे जनाः षडरे षट्चक्रेषु स्वकीयां बुद्धिमर्पयन्ति—

**"अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरापतम्"[६]॥**

---

१. नैषधीयचरिते-१।१४५; २. तत्रैव-१४।८८।
३. नैषधीयचरिते-१४।८८, नारायणीटीकायाम्, पृ. ५९८।
४. सौन्दर्यलहर्याम्-९, लक्ष्मीधराटीकायाम्, पृ. ७१-७२।
५. सौन्दर्यलहर्याम्-९, अरुणामोदिनीटीकायाम्, पृ. ७५; ६. ऋग्वेदे-१।१६४।१२।

एवमत्र तन्त्रोक्तस्य श्रीचक्रस्य प्रादुर्भावो वेदादेवाऽभूदिति सम्यक्तयाऽऽम्नातम्। वेदेषु, ब्राह्मणेषु, शुल्बसूत्रेषु च श्रीचक्रस्य प्रतीकानि बहूनि प्राप्यन्ते। एतस्याऽत्र तन्त्रस्थैर्वेदस्थैश्च विविधोदाहरणवचनैः सप्रमाणं समुपस्थापितो विषयः। विशुद्धतया तन्त्रेषु प्रतिष्ठितस्य त्रिपुरसुन्दर्याः श्रीचक्रस्य मूलं वेदेषु प्रतीकत्वेन सुष्ठु प्रतिपादितम्। एतानि प्रतिपादितान्यत्र श्रीचक्रवेदप्रमाणानि न तावदेतावन्त्येवाऽपि तु यदि कोऽपि सूक्ष्मतया वेदवाङ्मयमनुशीलयेत् तर्हि बहवः सन्दर्भाः प्राप्स्यन्ते, येषु श्रीचक्रस्य मूलं निहितम्। पृश्निनामधेयैर्ऋषिभिरेषा श्रीचक्रविद्या वैदिककाले कृत्स्नतया ज्ञाता। ततश्च कालान्तरे वेदशाखानां लुप्तत्वादेषा विद्या वेदान्निर्गत्य परम्परातः कदाचित् तन्त्रे प्रतिष्ठामवाप। वेदात्प्रसूता तन्त्रे रसतां प्राप्य श्रीचक्रविद्याऽद्यापि जनमनस्सु श्रीसुन्दर्याः अजस्रं स्रोतःपीयूषनिर्झरं शिवात्मकं बिन्दुरूपं प्रवाहितवती, यस्मिन्निर्झरे निष्णाताः साधकाः श्रीचक्रोपासनाजन्यां भुक्तिं मुक्तिं च विन्दन्ति।



**।। श्रीचक्रम् ।।**

नवयोनिं नवचक्राणि दीधिरे नवैव योगा नवयोगिन्यश्च।
नवानां चक्रा अधिनाथाः स्योना नवभद्रा नवमुद्रा महीनाम्।।
एका सा आसीत्प्रथमा सा नवासीदा सोनविंशदा सोनत्रिंशत्।
चत्वारिंशादथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु।।
(त्रिपुरोपनिषदि-२,३ मन्त्रौ)

बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंयुतषोडशारम्।
वृत्तत्रिभूपुरयुतं परितश्चतुर्द्वाः श्रीचक्रमेतदुदितं परदेवतायाः।।
(सौन्दर्यलहर्याम्-११, लक्ष्मीधराटीकायाम्, पृ. ८१)

●

# न्यायनये सार्थकशब्दविवेचनम्

**डॉ. विष्णुपदमहापात्रः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी



वृत्तिज्ञानाधीनपदजन्यपदार्थोपस्थितिद्वारैव शाब्दबोधो भवतीति सर्वजनानुभवसिद्धम्; परन्तु शाब्दबोधस्य कारणीभूतो यो हि शब्दः स शब्दः सार्थकत्वेन निरर्थकत्वेन वा शाब्दबोधस्य जनक इत्याकाङ्क्षायामुच्यते—

"स्वार्थान्वयगोचरो बोधः साकाङ्क्षैरपि सार्थकैरेव शब्दैः सम्पादनीयो भवति, न तु निरर्थकैः शब्दैः"[१]।

यदि सार्थकैरेव शब्दैरन्वयबोधः सम्पादनीयो भवति, तर्हि कोऽसौ सार्थकः कतिविधश्चेत्याशङ्कायामुच्यते जगदीशभट्टाचार्यैः—

"शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा"[२]।।इति।

अर्थाद् यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्य यादृशार्थावगाहिबोधं प्रत्यनुकूलः, स तथाविधार्थे सार्थकः। सार्थकशब्दलक्षणान्तर्गतसार्थकशब्दस्य 'अर्थेन सह वर्तमानं सार्थकमि'त्या-कारिका व्युत्पत्तिरभ्युपगन्तव्या।

तात्पर्यं तु—

गोघटादिरूढपदस्थले वृत्त्युपस्थाप्य[३] समुदितार्थविशेषस्य, पाचकादियौगिक-पदस्थले च पच्धातोः वुञ्प्रत्ययस्य वा शब्दैकदेशाद् वृत्त्युपस्थाप्यार्थस्य बोधार्थं शब्दान्तरं सहकृत्यैव यादृशानुपूर्व्यवच्छिन्नः शब्दः शाब्दबोधस्योपयोगी तादृशानुपूर्व्यवच्छिन्नः शब्दस्तादृशार्थे सार्थक इति।

---

१. श.श.प्र., पृ.२९; २. श.श.प्र., का.६।
३. सङ्केतो लक्षणा चार्थे पदवृत्तिः—श.वा., पृ.१।

लक्षणे च स्वस्य स्वघटकस्येति पदद्वयमुल्लिखितमस्ति, यदि स्वस्य इत्येवमुच्यते, तदा रूढिविशिष्टघटादिपदानां सार्थकत्वेऽभ्युपगतेऽपि यौगिकविशिष्ट-पाचकपाठकादिपदानां शक्त्या लक्षणया वानभ्युपगतत्वात् तादृशपदानामर्थो नैव वृत्त्युपस्थाप्यः पाचकपाठकादिपदानां सार्थकत्वमस्तु इत्यतः लक्षणे स्वघटकस्येति पदमुपात्तम्। एवञ्च स्वघटकस्येत्येतावन्मात्राभ्युपगमे सति यौगिकादिपदानां सङ्ग्रहेऽपि रूढिविशिष्टपदानामसङ्ग्रहत्वापत्तिः, तदापत्तेः परिहारार्थं स्वस्येति पदमपि लक्षणे उपादेयमिति, स्वस्य स्वघटकस्येत्युभयत्र सार्थकाभिप्रेतशब्दो ग्राह्यः।

फलोपधायकत्वशब्दमुपेक्ष्य लक्षणे यदनुकूलत्वशब्दस्योल्लेखः, तत्रापि किमपि रहस्यं वर्तते। तद्यथा—प्रथमतोऽत्र फलोपधायकत्वशब्दनिवेशस्य किमपि सार्थकत्वं नैव प्रतिभाति; परन्तु फलोपधायकत्वनिवेशे सति यादृशसार्थकशब्दात् शब्दश्रवणानन्तरं शाब्दबोधस्य नैवोत्पत्तिः, तादृशशब्दे फलोपधायकत्वस्या-विद्यमानत्वात् सार्थकशब्दलक्षणस्याव्याप्तिः स्यात्, तादृशाव्याप्तेः परिहारार्थं स्वरूपयोग्यत्वरूपानुकूलत्वं ग्राह्यमिति, एवञ्च तादृशफलानुपधायकत्वस्यापि तादृशशब्दे विद्यमानत्वादिति। तथा च—"यादृशानुपूर्व्यवच्छिन्नः स्वेतरशब्द-प्रयोज्ययादृशार्थनिष्ठविषयत्वप्रयोजकत्वे सति यादृशार्थबोधस्वरूपयोग्य-स्तादृशानुपूर्वीमान् शब्दस्तादृशार्थे सार्थक इति पर्यवसितार्थः"।

पटपाचकाद्याः प्रकृतयः सुप्तिङ्-कृत्तद्धितादयः प्रत्ययाः च-वा-तु इत्यादयो निपाताः शब्दान्तरं सहकृत्यैव शक्त्या लक्षणया वा वृत्त्या स्वार्थोपस्थितिद्वारैव नियमतः स्वस्वार्थस्य बोधका भवन्ति, 'गाम्' इत्यादिवाक्यस्थले च कदाचिदान-येत्यादिवाक्यसहकारेण वाक्यार्थबोधस्य जनकत्वेऽपि कदाचिच्चानयेत्यादिवाक्य-सहकृत्यैव 'गाम्' इत्यादिवाक्यात् 'कर्मत्वं गवीयम्' इत्याकारकप्रतीतेर्दर्शनात् लक्षणे 'नियमतः' इत्युल्लेखः।

अत्र काचन शङ्का उदेति—पाचकशब्दस्य स्वोत्तरवुञ्प्रत्ययेनोपस्थापितार्थ-विषयकान्वयबोधानुकूलत्वात् तादृशशब्दो यथा सार्थकतथैव शशविषाणेत्याद्य-लीकशब्दानां शशीयत्वपुरस्कारेण विषाणादिविषयकान्वयबोधस्य जनकत्वात् तादृशः शब्दः कथं न सार्थकः? इष्टापत्तिरिति, शशविषाणशब्दः शशीयत्वं विशेषणत्वेनाभ्युपगत्य विषाणादिविशेष्यकान्वयबोधस्य जनकत्वात् विषाणादि-विशेष्यकान्वयबोधानुकूलत्वाच्च सार्थक इति।

ननु शशविषाणशब्दस्य यदि सार्थकत्वं प्रतिपाद्यते, तर्हि एतादृश-शब्दप्रयोगस्थले अपार्थकनिग्रहस्थानमिति कथं नैवोच्यत इति चेत्, न, यतो निरुक्तवाक्यात्मकशब्दस्य तादृशान्वयबुद्धित्वावच्छिन्नं प्रति कारणत्वेऽपि

अयोग्यत्वाद् अर्थाद् विषाणरूपधर्मिणि शशीयत्वाभावाद् उक्तवाक्ये योग्यतैव नास्ति। इत्यतः शशविषाणेति वाक्यस्य अयोग्यत्वे चापार्थकनिग्रहस्थानमिति[1]। येन तादृशवाक्यस्य वक्ता निगृहीतो भवति। ''शशविषाणादिकः शब्दोऽपि शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताकान्वयबोधने सार्थक एव परन्त्वयोग्यः''[2]।

**सार्थकशब्दस्य भेदाः**

प्रकृति-प्रत्यय-निपातभेदेन सार्थकशब्दः त्रिविधः[3]। ननु शप्स्यनादिविकरणस्य नुमाद्यागमस्य च सार्थकशब्दान्तर्गतत्वात् प्रकृतिप्रत्ययनिपातश्चेति त्रिविधो यो हि विभागः कृतः, तन्न साधुरिति चेत्, न, कारिकोक्त-''स्वार्थबोध-कृत्''-शब्दस्य सार्थकत्वं प्रतिपादयितुं शप्स्यनादीनां प्रकृत्यादिसहायत्वेऽपि अर्थात् ''देवदत्तो भवति'' इत्यादिवाक्याद् उत्पत्त्याश्रयो देवदत्त इत्याकारकवाक्यार्थबोधानुकूलत्वेऽपि स्वकीयार्थोपस्थितिद्वारैव न तादृशार्थविषयकबोधस्य जनकत्वमिति।

अभिप्रायस्तु—सार्थकशब्दलक्षणे स्वकीयार्थबोधस्य जनकमिति यदुक्तं तत्तु स्वकीयार्थोपस्थितिद्वारैव बोद्धव्यम्। शप्स्यनादिविकरणानां नुमाद्यागमानां च निरर्थकत्वात् स्वकीयार्थोपस्थितिद्वारैव नान्वयबोधस्य जनकत्वमिति। अतः शप्स्यनादेः स्वार्थबोधकत्वाभावाद् निरर्थकत्वाच्च त्रिविधेति मूलोक्तविभागस्य नैव न्यूनत्वमिति।

पुनः शङ्का उदेति—शप्स्यनादेः सार्थकत्वाभावेऽपि ''पुत्रो वः'' ''पुत्रो नः'' इत्यादिंस्थलेषु युस्मत्सम्बन्धी पुत्रः, अस्मत्सम्बन्धी पुत्रो वा इत्याकारकान्वयबोधस्य दर्शनाद् वस्नसित्यादेशादीनां तादृशसम्बन्धविशेषरूपार्थविषयकबोधकत्वात् प्रकृतिप्रत्ययातिरिक्तवस्नसादेः आदेशत्वमपि सार्थकत्वरूपेण गृहीतत्वात्-त्रिविधेति विभागस्य व्याहतत्वमित्यपि वक्तुं नैव शक्यते, यतः ''पुत्रो वः'' इत्यत्र यादृशः सम्बन्ध्यावगाहिबोधस्तादृशबोधस्य न युष्मत्सम्बन्धवसादेशस्यार्थः, अपि च उक्तादेशस्य आदेशीभूतं यत् षष्ठ्यन्तं ''युष्माकम्'' इति वाक्यं तस्यैवार्थः। सुतराम् आदेशीमपेक्ष्य युष्मत्सम्बन्धस्य प्रतिपादकत्वात् 'पुत्रो वः'' इत्यत्र वसादेः सार्थकत्वाभावन्न त्रिविधेति विभागस्य न्यूनत्वमिति।

न च वसाद्यादेशे सार्थकलक्षणस्यातिव्याप्तिवारणेऽपि प्रकृत्यादिभ्यो भिन्ने निभनिकाशादिशब्दे सार्थकलक्षणस्यातिव्याप्तिः। यतो निभादिशब्दानां सदृशादि-

१. पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्, न्या.सू. ५।२।१०।

२. श.श.प्र., पृ.३०;

३. श.श.प्र.,पृ.३१।

रूपार्थविषयकान्वयबोधकत्वात् निभादिशब्दानां सार्थकत्वमिति वाच्यम्—समासान्तर्गतत्वनियतस्वार्थबोधकताकान्यत्वेन विशेषणादु[१]क्तदोषवारणम्, अर्थाद् निभनिकाशादिशब्दानां नियमितभावेन समासान्तर्गततया सदृशादिरूपार्थस्य बोधकत्वमिति। पदान्तरेण सह निभनिकाशादिशब्दानां समासाभावे सति केवलं निभनिकाशादिशब्दान्न कस्याप्यर्थस्य बोधः। ग्रन्थकारैः ''प्रकृत्यादिभिन्नेषु'' इति यदुल्लिखितं तद्द्वारा प्रकृतिप्रत्ययनिपातमात्रावच्छिन्नस्य सार्थकशब्दत्वमिति संसूच्यते। तथा च समासान्तर्गतत्वे सति स्वघटितसमासान्तर्गतत्वनियत-स्वार्थबोधकताकं यद्यत्स्वं तदन्यत्वं सामानाधिकरण्यसम्बन्धेन यादृशानुपूर्व्यवच्छिन्न-शब्दः स्वस्य स्वघटकान्यतरवृत्त्युपस्थाप्ययादृशार्थान्वयबोधजनकः सः शब्दः सार्थक इति निष्कृष्टलक्षणम्। सामानाधिकरण्यमात्रनिवेशे सति ''चन्द्रनिभोऽयम्'' इत्यत्र चन्द्रादिशब्दस्यापि सार्थकत्वानुपपत्तिरित्यतो नियतेत्यादिकमुक्तम्, चन्द्रस्य निभ इत्याद्यप्रयोगात् तेषु निरुक्तभेदासत्त्वेनातिव्याप्त्यसम्भवादिति भावः। प्रसङ्गात् प्रकृत्यादेः स्वरूपमत्र उपस्थाप्यते।

**प्रकृतिस्वरूपम्**

भारतीयपरम्परायाः सर्वेषु शास्त्रेषु साहित्येषु दर्शनेषु कलासु च प्रकृति-वाचकशब्दः श्रुतिगोचरो भवति। सा च प्रकृतिः का इत्याशङ्कायां सार्थकशब्द-स्वरूपनिरूपणानन्तरं जगदीशभट्टाचार्यैः सार्थकशब्दविभागान्तर्गतं प्रकृतेः स्वरूपमुच्यते। एवञ्च सा प्रकृतिः कुत्रापि स्वभावपरत्वेन कुत्रापि च गुणलिङ्गादि-परत्वेन श्रूयते, तथा हि—

''प्रकृत्या यद्वक्रम्,'' ''उष्णत्वमग्न्यातपसम्प्रयोगात् शैत्यं हि यत्सा प्रकृति-र्जलस्य''[३], ''मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः[४]'', ''अपेहि रे अत्र भवान् प्रकृतिमापन्नः''[५], ''प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगन्तव्यम्''[६], ''यामाहुः सर्वभूतप्रकृतिरिति''[७], ''महानुभावप्रकृतिः''[८], ''प्रवर्ततां प्रकृतिहिताय पार्थिवः[९], ''नृपतिः प्रकृतीरवेक्षितुम्''[१०] इत्यादिभिरुल्लिखितैर्वाक्यैरस्माभिर्ज्ञायते यद् अखिलब्रह्माण्डे कोऽपि प्रकृतिवाचकशब्दः वर्तत एव। स च प्रकृतिशब्दः प्रपूर्वककृधातोः कर्तरि क्तिच् भावादौ क्तिन् प्रत्ययेन निष्पादितः। सांख्याचार्यास्तु जगत्कारणीभूता प्रकृतिरिति अभ्युपगच्छन्ति। एतेषां नये प्रकृतेर्महान् महतोऽहङ्कारः,

---

१. श.श.प्र.,पृ.३२; २. श.१।९।
३. रघु. ५।५४; ४. रघु. ८।८७।
५. श. २; ६. शारी. ब्रह्म. १।४।२३; ७. श. १।१।
८. मा.१; ९. श. ७।३५; १०. रघु. ८।१८।

अहङ्कारात् पञ्चतन्मात्राणि एकादशेन्द्रियाणि च षोडशविकाराः, पञ्चतन्मात्रेभ्यश्च पृथिव्यादीनि पञ्चेति चतुर्विंशतितत्त्वानि प्रतिपादितानि।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः"[1] ।।

महत्तत्त्वस्योपादानभूतसत्त्वरजस्तमोरूपत्रिगुणानां साम्यावस्थात्मिका प्रकृतिरिति सांख्यैः प्रतिपादितम्। सांख्यप्रतिपादिता प्रकृतिर्न्यायनये न समीचीना, यतो हि न्याये प्रकृतिपदेन जगन्मूलकारणीभूतो जीवगतादृष्टराशिः स्वीकृतोऽस्तीति उदयनाचार्यैः प्रतिपादितम्।

"मूलत्वात् प्रकृतिः प्रबोधमयतोऽविद्येति यस्योदिता"[2] ।।

प्रकृतिशब्दस्य प्रवृत्तिनिमित्तार्थकत्वमभ्युपेत्य वैयाकरणा नैयायिकाश्च विचारार्थं प्रवर्तमानाः सन्ति।

वैयाकरणानां नये तल्लक्षणन्तु शब्दार्थरत्ने उक्तं यथा—एवं प्रकृतिप्रत्ययादिसमुदायरूपपदस्वरूपे तद्विभागे च दर्शिते इदानीं तदवयवरूपप्रकृतिप्रत्ययस्वरूपविभागौ प्रदर्श्येते। तत्र प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः सर्वेषामेव च प्रत्ययानां प्रकृतिं निमित्तीकृत्यैव विधानात्। प्रत्ययानाञ्च प्रत्यायकत्वरूपेणैव निवेशः, न तु वक्ष्यमाणप्रत्ययत्वेन तेन नान्योन्याश्रयः। अवधित्वञ्च पूर्वपरत्वरूपं ग्राह्यम्, बहुजादेर्निमित्तप्रकृतौ नाप्रसङ्गः।

वस्तुतस्तु—सिद्धान्ते वृत्तिशब्दानां समुदायशक्तिस्वीकारात् तद्धितादीनां निरर्थकत्वान्न तत्र प्रकृतिप्रत्ययादिविभागः। अत एव भाष्ये—"तावेव सुप्तिङौ यौ परौ सैव प्रकृतिराद्येति" सुप्तिङ्मात्रयोरेव प्रत्ययत्वमित्युक्तम्। ततो विधानावधेर्यौः परौ तावेव सुप्तिङौ या च तयोराद्या विधानावधिभूता सैव प्रकृतिरिति तदर्थः। एतदभिप्रायेणैव भर्तृहरिणा—

"यः शब्दः स्वेतरस्वार्थे स्वार्थस्यान्वयबोधने।
यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः"[3] ।।

इति प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्वत्वबोधकशब्दो विधानावधित्वमेव बोध्यः।

भाष्यैकवाक्यत्वान्न त्वेतत्कारिकोपात्तपूर्वापरत्वं तथा सति पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकारकान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च

१. सां.का.३।
२. न्याय.कु.प्र.स्त.२०; ३. वाक्यपदीये।

निरुक्तपूर्वत्वरूपलक्षणेनैव प्रसङ्गातिप्रसङ्गादिवारणसम्भवे प्रकृतिप्रत्यययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव यः शब्द इत्यादिकथनं बोध्यमेवञ्च यस्यार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः। तेन सिद्धान्ते तिङर्थप्रकारकान्वयबोधेऽपि न क्षतिः।

सार्थकशब्दस्वरूपनिरूपणानन्तरं जगदीशभट्टाचार्यैः सार्थकशब्दविभागान्तर्गतप्रकृतेः स्वरूपमुच्यते यत्—

''स्वेतरार्थानवच्छिन्नयत्स्वार्थस्यावबोधने।
यच्छब्दनिश्चयो हेतुः प्रकृतिः सा तदर्थिका[१]'' ।।

अर्थात् ''स्वेतरशब्दार्थाविशेषितस्य यादृशस्वार्थविषयकान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव हेतुस्तादृशशब्दस्तथाविधार्थे प्रकृतिः''[२] ।।

प्रकृतिलक्षणे तावत् स्वपदत्रयं दरीदृश्यते। स्वपदत्रयेण प्रकृत्याभिमतघटादिप्रातिपदिकस्य भूवादिधातूनां च ग्रहणमिति। स्वस्मादितरः स्वेतर इत्याकारिकया व्युत्पत्त्या स्वेतरशब्देन प्रकृतिभिन्नसुबादिविभक्त्यात्मकशब्दानां ग्रहणमिति। मूलोक्तः स्वार्थशब्दः प्रकृत्यर्थबोधकः, षष्ठीविभक्त्यर्थः प्रकारत्वम्। प्रकारतायाः निरूपकत्वसम्बन्धेन अन्वयबोधेऽन्वयः। ''स्वाव्यवहितोत्तरत्वसंसर्गेण'' इत्यत्र तृतीयार्थोऽवच्छिन्नत्वम्, ''यादृशशब्दवत्तानिश्चयः'' इत्यंशस्य यादृशशब्दनिष्ठप्रकारताकनिश्चयरूपार्थो बोध्यः। एवञ्च यादृशशब्दनिष्ठप्रकारतायां तृतीयाविभक्त्यर्थावच्छिन्नत्वस्य अन्वयः। तथा च ''स्वेतरशब्दवृत्तिज्ञानजन्योपस्थितिप्रयोज्यप्रकारतानिरूपितविशेष्यताभिन्नयादृशार्थनिष्ठविषयताशालिशाब्दबोधं प्रति अव्यवहितोत्तरत्वसंसर्गावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चय एव हेतुः, तादृशानुपूर्वीमत्त्वं तथाविधार्थे प्रकृतित्वमिति पर्यवसितम्। पङ्कजादिशब्दस्य तादृशनिश्चयः स्वोपस्थाप्यपदत्वावच्छिन्ने स्वोपस्थाप्यपङ्कजनिकर्तृत्वप्रकारकान्वयबोधं प्रत्येव हेतुरिति तत्राव्याप्तिवारणाय स्वेतरपदं लक्ष्यत्वेनाभिमतभिन्नपरम्, पङ्कजनिकर्तुरपि कदाचित् स्वेतरार्थत्वसम्भवात् स्वेतरार्थत्वमपहाय प्रयोज्यान्तं प्रकारताविशेषणम्।

न च पङ्कजपदभेदस्य पङ्कादिपदे सत्त्वाद् उक्तदोषतादवस्थ्यमिति वाच्यम्, पाचकादिपदेऽव्याप्तिवारणाय स्वपदस्य स्वघटकोभयपरत्वस्याऽऽवश्यकत्वात्। तथा च समुदायभेदस्यैकदेशे सत्त्वेऽपि स्वभेदस्य स्वस्मिन्नसत्त्वात्, स्वमते अन्तराभासमानपदार्थयोः प्रकारताविशेष्यतयोरैक्यात् प्रत्ययादौ नातिव्याप्तिरिति।

१. श.श.प्र., का.७; २. श.श.प्र., पृ.३३।

शशविषाणादिशब्दानां विशिष्टार्थाप्रसिद्ध्या तत्राव्याप्तिवारणाय यदर्थ इत्यपहाय यादृशार्थ इति। तथा च स्ववृत्तिज्ञानजन्योपस्थितिप्रयोज्य-यादृशधर्मावच्छिन्नविषयताशालिबोधं प्रतीत्यर्थ:।

''यादृशानुपूर्व्यवच्छिन्नाव्यवहितोत्तरत्वसम्बन्धावच्छिन्ननिश्चयवृत्तिविषयता-व्यापकं यादृशनिरुक्तविषयताशाल्यन्वयबोधस्वरूपयोग्यत्वं तादृशानुपूर्वीमत्त्वं तादृशविषयताकबोधं प्रति प्रकृतित्वमिति समुदितवाक्यार्थ:। शप्स्यनादिप्रत्ययेऽति-व्याप्तिवारणाय प्रयोज्यान्तं प्रकारताविशेषणम्। फलानुपधायकत्वविशिष्टप्रकृता-वतिव्याप्ते: परिहारार्थं कारणपदेन स्वरूपयोग्यत्वरूपकारणत्वमभ्युपेयम्। एकार्थबोधकशब्दे अन्यार्थबोधकशब्दस्य प्रकृतित्ववारणाय—''तादृशविषयता-निरूपकान्वयबोधं प्रति'' इत्यंशस्योपादानम्। विशेष्यरूपेण सुपादिनिश्चयोऽपि ''एकत्ववान् घट:'' इत्याकारकान्वयबोधस्य जनकत्वात् प्रत्यये प्रकृतिलक्षण-स्यातिव्याप्तिवारणाय कारणांशे अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्य-वच्छिन्नप्रकारता निविष्टा।

''नामधातुप्रभेदेन प्रकृते: द्विविधत्वाद् उभयत्र लक्षणसङ्गमनाय वक्ति—''पटभूप्रभृतयो हि शब्दा:''[1]।

तात्पर्यस्तु—''पटम्'' इत्याकारकद्वितीयाविभक्त्यन्तपटपदस्थले पटपदाव्य-वहितोत्तरमम्विभक्तेर्विद्यमानत्वाद् अव्यवहितोत्तरत्वसम्बन्धेन पटपदप्रकारकाम्पद-विशेष्यकनिश्चयस्य पटपदशक्त्युपस्थापितवसनत्वम्, अर्थाद् वस्त्ररूपार्थप्रकारक: प्रत्ययार्थकर्मत्वविशेष्यक: ''कर्मत्वं पटीयम्'' इत्याकारकान्वयबोधस्य नियमतो जनकत्वाद् वस्त्ररूपार्थे पटपदस्य प्रकृतित्वम्।

तिङन्तभूधातुप्रयोगस्थले च तिप्प्रत्ययस्य अव्यवहितोत्तरत्वसंसर्गेण भूपदविशिष्टत्वात् तादृशसम्बन्धेन भूपदप्रकारकतिप्प्रत्ययविशेष्यकनिश्चयो भूपदार्थोत्पत्तिप्रकारकतिप्प्रत्ययार्थकर्तृत्वविशेष्यकान्वयबोधस्य जनकत्वाद् भूपद-स्योत्पत्तिरूपार्थे प्रकृतित्वमिति नान्यथा, अर्थात् कथमपि विभक्त्यंशेऽनिश्चित्य न स्वकीयार्थविषयकान्वयबोधकत्वमिति।

सुप्तिङ्लिङादिप्रत्ययानां च पदार्थान्तरेणाविशिष्य यथाक्रमेण संख्याकालेष्ट-साधनत्वादीनां विषयीकृत्य अन्वयबोधं प्रति विभक्त्याद्यंशे अव्यवहितोत्तरत्व-सम्बन्धेन अनिश्चितेऽपि जनकत्वम्। कुत्रचित् स्थले च प्रत्ययसमूहानां तादृशान्वय-बोधस्य जनकत्वमिति प्रतीयमानत्वात् तत्स्फुरणार्थं ''चैत्र: पचति'' ''यजेत''

१. श.श.प्र.,पृ.३४।

इत्यादिस्थले शब्दान्तरं धर्मीरूपेणाभ्युपेत्य तादृशसम्बन्धेन ''सुप्'' ''तिङ्'' ''ईत्'' प्रत्ययानां निश्चयाभावकाले च यथाक्रमेण सुब्विभक्त्यर्थ एकत्वस्य चैत्रे तिप्-विभक्त्यर्थवर्तमानत्वस्य पच्धात्वर्थपाके, ईत्प्रत्ययार्थ इष्टसाधनत्वस्य यज्धात्वर्थयागे अन्वितत्वाद् प्रत्ययेऽतिव्याप्तिवारणाय मूले ''निश्चिता एव'' शब्दप्रयोगः।

प्रकृतिलक्षणान्तर्गत-''स्वेतरानवच्छिन्न'' इति पदघटकीभूतानवच्छिन्नान्त-दलव्यावृत्तेः प्रदर्शनार्थं ''बहुगुडो द्राक्ष्या'' इत्यादिग्रन्थस्य अवतारणा।

अभिप्रायस्तु—''गुडादीषन्न्यूना द्राक्षा'' इत्याकारकान्वयबोधजनकताया अव्यवहितोत्तरत्वसम्बन्धेन बहुच्प्रत्ययप्रकारकगुडपदधर्मिकनिश्चये विद्यमानत्वात् पूर्वोक्तप्रकृतिलक्षणस्यातिव्याप्तिः। सुतरां नाम्नः पूर्वविहितबहुच्प्रत्ययेऽतिव्याप्ति-वारणाय प्रकृतिलक्षणान्तर्गतस्वार्थविषयतायां स्वेतरपदार्थानवच्छिन्नत्वमवश्य-मुपादेयम्।

न च ''बहुगुडो द्राक्षा'' इत्यत्र गुडादिपदार्थेनावच्छिन्नो यो हि ईषन्न्यून-त्वरूपस्वार्थबहुच्प्रत्ययार्थः, तत्प्रकारकान्वयबुद्धित्वावच्छिन्नं प्रति बहुच्प्रत्ययस्य कारणत्वे मानाभावेति वाच्यम्, प्रत्ययसमूहे प्रकृत्यर्थविशेषितो यो हि संख्यादि-भिन्नप्रत्ययार्थस्तत्प्रकारकपदार्थान्तरविशेष्यकान्वयबोधजनकत्वस्य विद्यमानता इति व्युत्पत्तिः। ''घटः'' ''हे चैत्र'' इत्यादिस्थले प्रकृत्यर्थेनाविशेषितेऽपि सुबर्थैकत्वस्य सम्बोध्यत्वस्य वा यथाक्रमेण घटपदार्थे चैत्रपदार्थे वा अन्वितत्वम्। सुतरां प्रत्ययार्थे संख्याभिन्नत्वमपि अवश्यमभ्युपेयम्। तात्पर्यस्तु—''बहुगुडो द्राक्षा'' इत्यत्र बहुच्प्रत्ययार्थस्य प्रकारीभूतगुडपदार्थेन सह विशिष्य द्राक्षापदार्थेऽन्वयः। अतो बहुच्प्रत्ययस्य पदार्थान्तरेण सह अविशेषितस्वकीयार्थाबोधकत्वाद् नाम्नः प्राग् विहितबहुजादिप्रत्यये न प्रकृतिलक्षणस्यातिव्याप्तिः।

''बहुगुडो'' इति समुदायस्य प्रकृतित्वमिति यदि केनापि अभ्युपेयते चेत्, तदपि न साधुः; यतः प्रत्ययार्थस्य द्वारं विनैव प्रकृत्यर्थस्य प्रकृत्यन्तरार्थे नान्वयः। अत एव ''बहुगुडो द्राक्षा'' इत्यत्र यदि बहुगुडपदस्य प्रकृतित्वं स्यात्, तर्हि प्रकृत्यर्थो भविष्यति—गुडापेक्षया ईषन्न्यूनेति। तादृशपदार्थस्य द्राक्षापदार्थेऽन्वयः कर्तव्यः। अथ च द्राक्षाशब्दो नामविशेष एव, सुतरां कश्चन विभक्त्यर्थमन्तर्भाव्य ईषन्न्यूनत्वरूपबहुगुडपदार्थस्य न केनापि प्रकारेण द्राक्षापदार्थेऽन्वयः। अर्थाद् बहुगुड इत्यत्र पदद्वयमभ्युपेयम्। तथा च गुडपदस्य प्रकृतित्वम्। बहुच्प्रत्ययस्य च प्रत्ययत्वम्। यद्यपि साधारणतया प्रकृत्यनन्तरं प्रत्ययस्य विधानमिति सौत्रप्रस्थानत्वेऽपि ''ईषदसमाप्तौ नाम्नः प्राग् बहुच्[1]'' इति विशेषणानुसारेण

१. 'विभाषा सुपो बहुच् पुरस्तात्तु' अष्टा. ५/३/६८ वृत्तिः।

गुडप्रकृतिबोधकपदस्य प्राग् बहुच्प्रत्ययस्वीकार इति ज्ञानात्तादृशबहुच्प्रत्यये आलोच्य प्रकृतिलक्षणस्यातिव्याप्तेः परिहारार्थं स्वेतरानवच्छिन्नत्वमित्यवश्यं विशेषणीयम्।

एवकाराद्यात्मकाव्यये प्रकृतिलक्षणस्यातिव्याप्तिभयेन तद्वारणार्थमुच्यते—"न चैवमेवकारादेरन्ययोगाद्यर्थे प्रकृतित्वं न स्यात्"[1]। अर्थाद् अन्ययोगव्यवच्छेद-अयोगव्यवच्छेद-अत्यन्तायोगव्यवच्छेदेति त्रिविधार्थ एवकारस्य।

"अयोगमन्ययोगञ्च अत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः" ।।

दृष्टान्तत्वेन अस्माभिरुच्यते यत् "पार्थ एव धनुर्धरः" इत्यत्र विशेष्यसङ्गतात्मक एवकारस्थले एवकाराद् अन्ययोगव्यवच्छेदरूपार्थस्य, "शङ्खः पाण्डुर एव" इत्यत्र विशेषणसङ्गतात्मक एवकाराद् अयोगव्यवच्छेदरूपार्थस्य, "नीलं सरोजं भवत्येव" इत्यत्र क्रियासङ्गत एवकाराद् अत्यन्तायोगव्यवच्छेद-रूपार्थस्य च बोधो भवतीति[2]।

अत्र शङ्का उदेति—"शङ्खः पाण्डुर एव" इत्यत्र विशेषणसङ्गतात्मक एव-काराद् यथा अयोगव्यवच्छेदरूपार्थस्य प्रतीतिः, तथैव 'वायुर्वात्येव' इत्यत्र क्रियासङ्गत एवकारादपि तादृशार्थस्य प्रतीतिः, न त्वत्यन्तायोगव्यवच्छेदरूपार्थस्य प्रतीतिः। सुतरां क्रियासङ्गत एवकारस्थले सर्वत्रात्यन्तायोगव्यवच्छेदरूपार्थस्य प्रतीयमानं स्यात्, तत्कथं सम्भवति इत्याशङ्कायामुच्यते—"नीलं सरोजं भवत्येव"। एतत्स्थलीय एवकारस्य क्रियासङ्गतत्वरूपेण स्वीकारेऽपि "वायुर्वात्येव" इत्यत्र वा-धात्वर्थगत्यात्मकक्रियाया विशेषणत्वात् "वात्येव" इत्यत्र च एवकारस्य विशेषणसङ्गत एवकारत्वेनाभ्युपगम्यते। अत उक्त एवकाराद् अयोगव्यवच्छेदरूपार्थस्वीकारे न काचन बाधा।

जगदीशतार्किकाः प्रवदन्ति—"पार्थ एव धनुर्धरः" इत्यत्र पार्थादिपदार्थै-र्विशेषितो यो ह्यन्ययोगव्यवच्छेदादिरूप एवकारार्थः, तद्विषयकान्वयबुद्धित्वा-

---

१. श.श.प्र.।

२. विशेष्यसङ्गतः—अन्ययोगव्यवच्छेदो यथा—'पार्थ एव धनुर्धरः' इत्यादौ पार्थानां पदान्ते प्रशस्तधनुर्धरत्वं व्यवच्छिद्यते।
विशेषणसङ्गतः—अयोगव्यवच्छेदो यथा—'शङ्खः पाण्डुर एव' इत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छिद्यते।
क्रियासङ्गतः—अत्यन्तायोगव्यवच्छेदो यथा—'नीलं सरोजं भवत्येव' इत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते। वाचस्पत्यभिधानम्।

वच्छिन्नं प्रति ''पार्थ एव'' इत्यस्य घटकीभूत एवकारस्य कारणत्वमिति। अर्थाद् एवशब्दः स्वभिन्नपदार्थैरविशेषितस्वार्थस्य प्रतिपादकत्वान्न प्रकृतिः।

**एवकारविषये शाब्दिकानां मतं तत्खण्डनञ्च**

शाब्दिकानामभिप्रायस्तु—''पार्थ एव धनुर्धरः'' इत्यत्र विशेष्यसङ्गत एवकारस्थलीयपार्थविशेषितान्ययोगसामान्यस्य व्यवच्छेदो हि एवशब्दशक्यार्थो भवति। तत्र शङ्का च पार्थान्ययोगव्यवच्छेदो यदि एवशब्दस्य शक्यार्थत्वमभ्युपेयते चेत्, तर्हि एवशब्दप्राग्विहितपार्थशब्दस्य निरर्थकत्वं स्यात्। एतदुत्तरे शाब्दिकाः प्रवदन्ति—उक्तस्थले पार्थशब्दस्य निरर्थकत्वेऽपि एवशब्दस्य च पार्थशब्देन सह साकाङ्क्षत्वाद् एवकारस्य पार्थविशेषितान्ययोगव्यवच्छेदरूपार्थः सम्भवति। अत एवशब्दस्य तादृशार्थे तात्पर्यग्राहकत्वेन पार्थशब्दस्यापि उपयोगित्वमभ्युपेयते। तात्पर्यग्राहकशब्देन तात्पर्यानुमापकत्वस्य प्रतीयमानत्वम्। अनुमानाकारस्तु—''अयम् एवकारः पार्थान्ययोगव्यवच्छेदपरः पार्थपदसमभिव्याहृत एवकारत्वात्'' इति। अनुमितिसाधकीभूतहेत्वंशे पार्थशब्दस्य प्रविष्टत्वात् परम्परया पार्थपदस्यापि उक्ततात्पर्यानुमितेः साधकत्वात् तात्पर्यग्राहकत्वमिति। उक्तसिद्धान्तप्रातिकूल्येन सिद्धान्तिनो वक्तुं प्रभवन्ति—'पार्थ एव' इत्यत्र यत्र पार्थपदस्य लाक्षणिकत्वं तत्र एवकारात्मकपक्षे पार्थपदसमभिव्याहृत-एवकारत्वरूपहेतोर्विद्यमानत्वेऽपि पार्थान्ययोगव्यवच्छेदपरत्वरूपसाध्यस्याविद्यमानत्वाद् उक्तहेतोर्व्यभिचारदोषेण दुष्टत्वमिति। तत्परिहारार्थं शपादिवद् आकाङ्क्षासम्पादकत्वेनैवेति कल्पान्तरमनुसरति जगदीशः। तथा च निरुक्तस्थले आकाङ्क्षापदेन आनुपूर्वीरूपाकाङ्क्षा संसूचिता, तत्सम्पादकत्वमिति घटकत्वरूपार्थो बोद्धव्यः।

अभिप्रायस्तु—''पचति'' ''भवति'' इत्यादिस्थले शपादिविकरणघटितानुपूर्वीप्रकारविधया यथा शाब्दबोधस्य जनकतावच्छेदिका तथैव 'पार्थ एव' इत्यत्र पार्थपदघटितानुपूर्वीप्रकारविधया पार्थान्ययोगव्यवच्छेदरूपार्थविषयकान्वयबोधस्य जनकतावच्छेदिका। फलतः शपादिविकरणस्य यथा आकाङ्क्षासम्पादकत्वेनोपयोगित्वं तथैव 'पार्थ एव' इत्यत्र पार्थपदस्यापि पार्थपदसाकाङ्क्ष एवकारस्य आकाङ्क्षासम्पादकत्वेनोपयोगित्वमिति। अतः ''पार्थ एव धनुर्धरः'' इत्यत्र शाब्दिकानां नये एवेति निपातशब्दस्य पार्थान्ययोगव्यवच्छेदरूपार्थे प्रकृतित्वं भवति।

पुनः शङ्का उदेति—एवकारात् पूर्वोक्तार्थत्वस्य अभ्युपगतत्वात् स्वभिन्नपदार्थैरविशेषितत्वेऽपि एवशब्दस्य अव्यवहितोत्तरत्वसम्बन्धेन कस्मिन्नपि विभक्त्यंशे अनिश्चितत्वात् पूर्वोक्तप्रकृतिलक्षणे कथं सङ्गतिः, एतदुत्तरे तार्किकाः प्रवदन्ति—

एवशब्दोत्तरविभक्तेर्लोप इति दरीदृश्यते, अनुसन्धीयमानविभक्त्यंशे अव्यवहितोत्तरत्वसम्बन्धेन एवशब्दप्रकारकनिश्चयत्वपुरस्कारेण तादृशनिश्चयः पार्थान्ययोगव्यवच्छेदात्मकस्वकीयार्थविषयकान्वयबोधस्य जनकत्वाद् एवकारात्मकनिपातशब्दे प्रकृतलक्षणसङ्गतिः। अतो बाधकाभावाद् एवकारस्य प्रकृतित्वमभ्युपेयम्।

तन्मतं खण्डयितुं जगदीशः प्रवदति—यत् शाब्दिकानां नये "पार्थ एव धनुर्धरः" इत्यत्र पार्थशब्दो यदि अर्जुनरूपार्थस्य बोधको न स्यात् (अर्थाद् निरर्थकः स्यात्), तर्हि सर्वजनाभ्युपगतपार्थपदार्थ एवकारार्थश्च एतदुभयस्य भेदसमबन्धेनोत्पद्यमानो यो हि अन्वयबोधः, तदपलापस्य प्रसक्तिः स्यात्, पार्थपदस्य निरर्थकत्वात्, शाब्दिकनये केवलमात्र एवकारस्य पार्थान्ययोगव्यवच्छेदरूपार्थोपस्थापकत्वाच्च।

यदि शाब्दिका धनुर्धरादिपदस्यानुपस्थितिकाले "पार्थ एव" इत्यत्र पार्थपदस्यार्थो नाभ्युपेयते चेत्तर्हि उक्तस्थले शाब्दिकानां नयेऽपि शाब्दबोधो नाभ्युपेयः, निर्धर्मितावच्छेदकशाब्दबोधस्य सर्वैरनङ्गीकारत्वात्। अतः शाब्दिकानां पक्षे च पार्थशब्दाद् अर्जुनरूपार्थमभ्युपेत्य स्वप्रतियोगिताकत्व-रूपभेदसम्बन्धेन पार्थपदार्थस्य अन्ययोगव्यवच्छेदरूप-एवकारार्थैकदेशे अन्यत्वे अन्वयोऽभ्युपेयः, तथा च—"पार्थ एव धनुर्धरः" इति वाक्यात् "पार्थप्रतियोगिकभेदवन्निष्ठभेदप्रतियोगितावच्छेदकधनुर्धरत्ववदभिन्नः पार्थः" इत्याकारकशाब्दबोधस्योपपत्तिरिति।

उपर्युक्ताभिप्रायेण जगदीशः प्रवदति—एवकारस्य यदि प्रकृतित्वमभ्युपेयते तर्हि पार्थशब्दस्य एवशब्दस्य च समानविभक्तिकत्वाद् एवपदार्थे पार्थपदार्थस्याभेदान्वयबोधापत्तिः स्यादिति। यदि शाब्दिकैरुच्यते "वह्निना सिञ्चति" इत्याकारकायोग्यवाक्याद् यथा योग्यताभ्रमात् शाब्दभ्रमः, तथैव "पार्थ एव धनुर्धरः" इत्यत्र योग्यताभ्रमाद् एवकारार्थे पार्थपदार्थस्य अभेदान्वयबोधोऽभ्युपेयः। शाब्दिकोक्तेः प्रत्युत्तरे नैयायिकाः प्रवदन्ति तन्न साधुः; यतः "पार्थ एव धनुर्धरः" इत्यादिस्थले योग्यताभ्रमजनितशाब्दबोधस्य कथञ्चित् सम्भवेऽपि "व्यवच्छेद एव" अन्ययोगव्यवच्छेदरूप एवकारार्थस्य व्यवच्छेदपदार्थस्य चाभिन्नत्वाद् व्यवच्छेदपदार्थे एवपदार्थस्य अभेदसम्बन्धेन यथार्थयोग्यताज्ञानाद् यथार्थान्वयबोधस्यापत्तिः स्यात्, यत उक्तस्थले यथा यथार्थयोग्यताज्ञानस्य विद्यमानत्वं तथैव अभेदसम्बन्धेन प्रातिपदिकार्थद्वयान्वयबोधानुकूलव्यवच्छेदशब्दे एवशब्दे च समानविभक्तिकत्वस्य विद्यमानत्वात् शाब्दिकाशङ्कित एवकारस्य कथमपि प्रकृतित्वमङ्गीकर्तुं शक्यते। अर्थाद् एवकारस्य प्रकृतित्वं नास्तीति।

एवं प्रकारेण एवकारस्य प्रकृतित्वमभ्युपगतानां शाब्दिकानां मतखण्डनानन्तरं ये खलु एवकारस्य प्रकृतित्वेऽपि तत्र प्रकृतित्वं नास्ति इत्यभ्युपगच्छन्ति तेषां मतखण्डनार्थं प्रवदन्ति—"यत्तु उपसर्गाणामिवैवकारादिनिपातानामपि न प्रकृतित्वं निरर्थकत्वात्; परन्तु समभिव्याहृतपार्थादिपदानां तदन्ययोगव्यवच्छिन्नादिलक्षणायां निरूढत्वसम्पादकत्वमात्रमिति मतं, तच्चिन्त्यम्"[1]।

अभिप्रायस्तु—उपसर्गादीनां यथा निरर्थकत्वं तथैव एवकारस्य निरर्थकत्वं स्यात्, तथा सति सार्थकपार्थादिशब्दोच्चारणकाले निरर्थकत्वविशिष्ट एवकारस्य कथमुच्चारणमिति चेत्, न, सार्थकशब्दप्रयुक्तनिरर्थकशब्दानामपि उपयोगित्वमस्ति। उपयोगिता च—"पार्थ एव धनुर्धरः" इत्यत्र एवकारेण सहोच्चारितपार्थशब्दस्य पार्थान्ययोगव्यवच्छेदरूपार्थे लाक्षणिकत्वम्। पार्थपदगता लक्षणा निरूढेति। तादृशनिरूढलक्षणायास्तात्पर्यग्राहकत्वे तु पार्थपदेन सह पौर्वापर्यक्रमेण सहोच्चारित एवशब्दस्य विद्यमानत्वात् पार्थशब्दस्य तादृशार्थे निरूढलक्षणा सम्भवति। अतः "एव"शब्दगतनिरूढलक्षणासम्पादकत्वमेव एवशब्दोपयोगित्वम्, "तच्चिन्त्यम्", यतः कोषादिग्रन्थे अव्ययात्मकस्य एवकारादिनिपातस्य व्यवच्छेदादिरूपार्थे वाचकत्वमङ्गीकाराद् घटादिशब्द इव एवशब्दस्यापि अर्थविशेषवाचकत्वाद् एवशब्दस्य सार्थकत्वमवश्यमभ्युपेयम्। शक्तिग्राहकोपायस्य विद्यमानत्वेऽपि एवशब्दस्य यदि निरर्थकत्वमभ्युपेयते तर्हि तुल्ययुक्त्या घटादिशब्दानामपि निरर्थकत्वमभ्युपेत्य घटपदसहोच्चारित—"अम्"प्रत्ययस्य घटीयकर्मत्वरूपार्थे निरूढलक्षणां प्रकल्प्य घटपदं तादृशलाक्षणिकार्थे तात्पर्यग्राहकमित्यपि वक्तुं शक्यते, इदमेव तच्चिन्त्यमिति पदस्य बीजम्।

ननु उक्तलक्षणे "पचतिकल्पम्" इत्यत्र कल्पभागे अतिव्याप्तिः, पाकधर्मिकपदसमाप्तत्वबोधजनकताव्यापकत्वस्य सुबादिधर्मिककल्पनिश्चयत्वे सत्त्वात्। न च यादृशानुपूर्वीपर्याप्त्यवच्छेदकताप्रकारत्वशालिनिश्चयत्वे तादृशजनकताव्यापकत्वं निवेश्यमित्यतो नोक्तदोष इति वाच्यम्, तथापि "सरसिजं पुष्पम्" इत्यादौ सरसीति भागेऽतिव्याप्तिः, जनधात्वंशे सरसीति भागनिश्चयस्य तादृशजनकताव्यापकत्वात्। तादृशजनकतावच्छेदकत्वस्यापि उक्तनिश्चयत्वे निवेशेऽनवच्छिन्नान्तविशेषणस्य व्यापकत्वनिवेशस्य च वैयर्थ्यं गौरवञ्चेति तदुभयविशेषणद्वयशून्यलक्षणान्तरस्यावतरणिकामाह—लाघवादन्यथा निर्वक्ति[2]—

"स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः ।
तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका" ।।

---

१. श.श.प्र.; २. श.श.प्र., पृ.४१।

"स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति फलितार्थः। बहुगुडो द्राक्षेत्यादौ बहुजाद्यर्थस्यान्वयबोधं प्रति न गुडादिपदधर्मिकबहुजादिनिश्चयत्वेन हेतुत्वमपि तु सुबादिधर्मिकबहुगुडादिपदनिश्चयत्वेन, अन्यथा केवलादपि बहुगुडादिशब्दाद् द्राक्षादौ बहुजाद्यर्थस्यान्वयबोधापत्तिरिति न तत्र प्रसङ्गः"[१]।

"पचतिकल्पम्" इत्यादौ कल्पप्रत्ययेऽतिव्याप्तिवारणाय जनकतावच्छेदकताया: पर्याप्तिनिवेशः, तादृशज्ञानत्वस्यातथात्वान्निश्चयत्वनिवेशः, स्वनिष्ठविशेष्यताया जनकतानवच्छेदकत्वात् प्रकारतानिवेशः, प्रमेयत्वादिना घटादिनिश्चयत्वस्यातथात्वाद् अवच्छिन्नत्वं प्रकारताविशेषणमुपादेयम्। तथा च—किञ्चिद्धर्मावच्छिन्नविशेष्यकाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं स्वोपस्थाप्ययादृशार्थविषयताकान्वयबोधजनकतावच्छेदकतापर्याप्त्यधिकरणं तादृशानुपूर्वीमच्छब्द एव तथाविधार्थे प्रकृतिरिति पर्यवसितम्। अमादिधर्मिकघटादिनिश्चयत्वस्य घटीयं कर्मत्वमित्याद्यन्वयबोधजनकतावच्छेदकतापर्याप्त्यधिकरणत्वाद् घटाद्यर्थे घटादेः प्रकृतित्वम्। कर्मताद्यन्वयबोधे तु अमादिनिश्चयस्यातथात्वाद् नाऽमादिप्रत्ययेऽतिव्याप्तिः। अन्यत्सर्वं पूर्वदिशाऽवसेयम्।

**प्रत्ययस्वरूपम्**

प्रकृतिलक्षणनिरूपणानन्तरं प्रत्ययस्वरूपं निरूपयति जगदीशः—

"यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।
स तादृशार्थे शब्दः स्यात्प्रत्ययोऽसौ चतुर्विधः" ।।[२]

तदर्थश्च—यादृशार्थकप्रकृतिनिपातभिन्नयादृशार्थे प्रशस्तशक्तिमान् निरूढलक्षणात्मकवृत्तिमांश्च यादृशः शब्दः स तादृशार्थबोधकः प्रत्ययो चतुर्विधः।

ननु वृत्तिशब्दस्य शक्तिलक्षणान्यतरवाचित्वात् कुतो निरूढलक्षणाप्राप्तिः? आधुनिकलक्षणाया वृत्तिपदात् तल्लाभे तु उदक्षरत्वापत्तिरित्यत आह—"प्रशंसायां मतुपो विधानात्" अर्थात्—

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां मतुबाद्या भवन्त्यमी" ।।

---

१. श.श.प्र., पृ.४२।
२. श.श.प्र., का.१।

उपर्युक्तानुशासनात् प्रशंसायां मतुप्प्रत्ययस्य विधानत्वमिति। मूलोक्त-वृत्तिशब्देन शाब्दबोधोपयोगिपदपदार्थयोः सम्बन्धत्वमभ्युपेयम्, उक्तसम्बन्धः शक्त्या लक्षणया वा स्वीकार्यः, तच्चाग्रे वक्ष्यते, एतदभिप्रायेण शक्तिवादे गदाधरभट्टाचार्यैः प्रतिपादितं यत्—

"सङ्केतो लक्षणा चार्थे पदवृत्तिः"[१]।

यादृशार्थकप्रकृतिभिन्नत्वस्य प्रत्ययलक्षणे विशेषणत्वं नाभ्युपेयते चेत्, तर्हि शुक्लादिशब्दानां प्रशस्तवृत्तिमत्त्वात् तत्र प्रत्ययलक्षणस्यातिव्याप्तिः। यतः "शुक्लं रूपम्" इत्यत्र शुक्लशब्दाद् गुणविशेषावच्छिन्नस्य यथा बोधः, तथा निरूढलक्षणया "शुक्लो घटः" इत्यत्र रूपविशिष्टघटाद्यात्मकगुणवतोऽपि बोधो भवति। एवञ्च "तिष्ठति" इत्यत्र शक्त्या स्थाधातूपस्थाप्यस्थितिरूपार्थस्य यथा बोधः, तथैव निरूढलक्षणया स्थाधातुना प्रस्थानरूपार्थस्य बोधो भवति। अतः शुक्लादिशब्दानां स्था इत्यादिधातूनां च तादृशार्थे प्रशस्तवृत्तिमत्त्वात् प्रत्ययलक्षणस्यातिव्याप्तिः। तदतिव्याप्तेः परिहाराय यादृशार्थकप्रकृतिभिन्नत्वस्य वृत्तिमत्वांशे विशेषणीयम्। निपातभिन्नत्वमपि यदि नैव निवेश्यते चेत्तर्हि प्रकृत्यनवच्छिन्नचादिशब्दानां समुच्चयादिरूपार्थे प्रशस्तवृत्तिमत्त्वात् समुच्चयार्थ-कचादिशब्दे प्रत्ययलक्षणस्यातिव्याप्तिः। तद्वारणाय निपातभिन्नत्वस्य प्रत्ययलक्षणे विशेषणीयम्। चादयस्तु न निपातेभ्यो भिन्नाः।

पुनः शङ्का उदेति "सु इत्युच्चरति" "सु इति वद" इत्यादौ स्वादिशब्दानां स्वस्वरूपार्थे प्रकृत्यभिन्नत्वात् स्वादौ प्रत्ययलक्षणस्याव्याप्तिः कुतो नोक्ता। तदुत्तरे कथनीयमस्ति यत् स्वादिशब्दानां प्रत्ययरूपेऽर्थे प्रकृतित्वेऽपि एकत्वादि-संख्यारूपेऽर्थे न प्रकृतित्वम्। अर्थाद् एकत्वादिरूपार्थे सुपदस्य प्रत्ययत्वम्, तस्य च प्रकृत्यनवच्छिन्नत्वाद् एकत्वाद्यर्थे प्रशस्तवृत्तिमत्त्वाच्च न प्रत्ययलक्षणस्या-व्याप्तिः। अतो ग्रन्थकारैस्तु केवलमात्रप्रकृतिभिन्नत्वमनिवेश्य यादृशार्थकप्रकृति-भिन्नत्वस्य निवेशः कृतः। "सुबादयस्तु स्वपरतायामेव प्रकृतयो न तु एकत्वाद्यर्थे[२]"। अस्माभिर्ज्ञायते यत् चादयः निपाताः कस्मिन्नपि अर्थे न प्रत्ययाः। अतः प्रकृत्यंशे यादृशार्थकत्वमवश्यं विशेषणीयम्। तथा च यादृशार्थक-प्रकृतिभिन्नत्वे सति निपातभिन्नो यो हि शब्दो यादृशार्थे शक्तिनिरूढलक्षणान्यतर-प्रशस्तवृत्तिमान् तादृशः शब्दस्तादृशार्थे प्रत्ययः।

---

१. शक्तिवादे।

२. श.श.प्र., प्र.प्र.।

एवञ्च यत्र कर्मत्वादिरूपार्थे तृतीयाविभक्तेः शास्त्रीयप्रयोगो दृश्यते, तत्र तृतीयाविभक्तेः कर्मत्वाद्यर्थे निरूढलक्षणाऽभ्युपगम्येति। यथा—"पशुना रुद्रं यजते"। वस्तुत उक्तशास्त्रीयवाक्यान्तर्गतः "पशुना" इत्यत्र तृतीयाविभक्त्यर्थः कर्मत्वम्। "रुद्रम्" इत्यत्र द्वितीयाविभक्त्यर्थः सम्प्रदानत्वम्। "यजते" इत्यत्र च यज्धात्वर्थो दानम्। अर्थात् "पशुना रुद्रं यजते" एतद्वाक्याधीनरुद्रोद्देश्ये पशुप्रदानमिति वाक्यार्थबोधो भवति। तथा च "पशुं रुद्राय ददाति" इत्याकारकविशिष्टार्थस्यावगतिः। "सम्प्रदानं भवेत् कर्म, कर्म स्यात् करणं यजेः" इत्यनुशासनस्य निरूढलक्षणाग्राहकत्वादिति भावः।

ननु "पशुना रुद्रं यजते" इत्यादौ तृतीयाविभक्तेर्निरूढलक्षणामनङ्गीकृत्य आधुनिकलक्षणया तृतीयाद्वितीयाविभक्तेश्च कर्मत्वस्य सम्प्रदानत्वस्य च उपस्थापकत्वसम्भवात्, अर्थात् प्रमाणाभावात् प्रत्ययसमूहानां शक्तिलक्षणान्यतर-वृत्त्या नार्थबोधकत्वमिति चेत्, न, यथा "एकं वक्तीति" एकवचनम्, "द्वौ वक्तीति" "द्विवचनम्" इत्याकारकव्युत्पत्तिलभ्यैकवचनद्विवचनात्मकयौगिकशब्देन एकत्वद्वित्वादीनां बोधसम्भवेऽपि "द्व्येकयोर्द्विवचनैकवचने"[1] "बहुषु बहुवचनम्"[2] इत्यादिपाणिनिसूत्राज्ज्ञायते यदेकवचनाद् एकत्वस्य द्विवचनाद् द्वित्वस्य बहुवचनाद् बहुत्वस्य च बोधः। एतदभिप्रायेण जगदीशः प्रवदति—

"तृतीयादौ कर्मत्वादेः सत्यपि लक्षणा न निरूढा, प्रायशः प्रयोगविरहात्। अत एव यत्रास्ति प्रयोगस्तत्र तृतीयादितोऽपि कर्मत्वादेरवगमः। यथा "पशुना रुद्रं यजते" इत्यादौ। अत एव चान्वर्थबलादेवैकवचनादेरेकत्वादिबोधकत्वप्राप्तौ "द्व्येकयोर्द्विवचनैकवचने", "बहुषु बहुवचनम्" इति यत् पाणिनिः प्राह, तदिदं द्वित्वैकत्वादावेव द्विवचनैकवचनादिनियमार्थमिति फणिभाष्यकृतः। तेन द्वित्वादावपि नैकवचनादिप्रयोगः प्रमाणम्"।[3]

प्रत्ययास्तु सुप्तिङ्कृत्तद्धितभेदेन चतुर्विधाः भवन्ति। शक्तिनिरूढ-लक्षणात्मकप्रशस्तवृत्त्युपस्थापितत्वाद् यथा सुब्विभक्तेः प्रत्ययलक्षणस्य लक्ष्यत्वं तथैव तद्धितादिप्रत्ययानां तादृशवृत्त्युपस्थापितपदार्थबोधकत्वात् तेषामपि प्रत्ययलक्षणस्य लक्ष्यत्वं वरीवर्तते।

ननु सुप्प्रत्ययस्थले शक्तिलक्षणान्यतरप्रशस्तवृत्तेर्नियमेऽभ्युपगतेऽपि तद्धिताख्यातादिप्रत्ययस्थले तादृशनियमो नाभ्युपेयते चेत्, तर्हि का क्षतिरिति चेत्,

१. अष्टा. १।४।२२।
२. तत्रैव-१।४।२१।
३. श.श.प्र., पृ.४५।

न, भक्षधातूत्तरण्वुल्प्रत्ययेन भक्षकशब्दस्य निष्पत्तिः। ण्वुलन्तधातोर्थो भोजनकर्ता। ''दक्षस्य अपत्यम्'' इत्यत्र दक्षशब्दोत्तरापत्यार्थकेन्प्रत्ययस्य विधानाद् दाक्षिपदस्य निष्पत्तिः। तथा च निरूढलक्षणया दाक्षिपदाद् दक्षापत्यस्य बोधः। एवञ्च ''पक्ष्यति'' इत्यत्र आख्यातिकस्यतिप्रत्ययाद् निरूढलक्षणया पाकगतभावित्वस्य बोधो भवति, न तु आधुनिकलक्षणया भक्षपदस्य भोजनाधिकरणत्वविशिष्टदेश-विशेषार्थबोधकत्वम्। न वा दाक्षिपदस्य दक्षस्वामिकधनविशेषार्थबोधकत्वम्, न वा पक्ष्यतिपदस्य वर्तमानकालिकत्वविशिष्टपाकविशेषार्थबोधकत्वमिति।

ननु ''भक्षकः, दाक्षिः, पक्ष्यति'' इत्यादौ प्रत्ययानामर्थविशेषबोधकत्वाद् भवतु नाम तेषां वृत्तिमत्त्वम्; किन्तु ''जुगुप्सते देवता'' इत्यत्र निरर्थकत्वविशिष्टसन् तलादिप्रत्ययस्थले प्रत्ययलक्षणस्याव्याप्तिरिति, यतः ''जुगुप्सते'' इत्यत्र सन्-प्रत्ययान्तगुध्धातुना कुत्सार्थस्य बोधो भवति। एवञ्च तल्प्रत्ययविशिष्टदेवताशब्देन देवतार्थविषयकबोधस्य जायमानत्वाद् उक्तस्थलद्वये धात्वर्थस्य प्रातिपदिकार्थमात्रस्य च बोधदर्शनादिति चेत्, न, स्वार्थिकप्रत्ययमात्रस्य च स्वरूपमर्थ इत्यभ्युपगतत्वान्न जुगुप्सते देवता इत्यत्राव्याप्तिः, अर्थाद् धातूत्तरसन्प्रत्ययस्य विधानत्वात् तादृश-प्रत्ययस्य च धात्वर्थमात्रबोधकत्वात् सन्-तलादिप्रत्ययानां तादृशार्थबोधकत्वाच्च सन् तलादिप्रत्ययानां निरूढलक्षणया प्रकृत्यर्थस्य बोधकत्वं न तु निरर्थकत्वमिति।

एवञ्च भावविहितानामपि पदार्थानामुक्तरीत्या गतिः। तत्रापि भावपदार्थस्य धात्वर्थस्वरूपपरत्वमित्यभ्युपेयम्। अन्यथा ''पाकं पश्य'' इत्यादौ धात्वर्थस्य पचनादेः कर्मत्वादावन्वयानुपपत्तेः, सुबर्थे धात्वर्थस्यान्वयाव्युत्पन्नत्वात्। इत्थञ्च ''स्तोकः पाकः'' इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यम्। अन्यथा स्तोकादीनां धात्वर्थविशेषणत्वे नियमतो द्वितीयापत्तेः। अत एव ''सञ्चारो रतिमन्दिरावधि'' काव्यम्, ''आगमो निष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो'' इत्यादि स्मृतिश्च सङ्गच्छत इति नव्याः[१]।

तात्पर्यस्तु—''भावे घञ्[२]'' इति पाणिनिसूत्रानुसारेण भावपदस्य स्वरूपार्थ-कत्वम्, भावविहितकृत्प्रत्ययस्थले घञः प्रकृतिभूतो यो धातुस्तदर्थस्य घञ्-प्रत्ययार्थस्य चाभिन्नत्वम्। पच्धातूत्तरभावविहितघञ्प्रत्यययोगे पाकपदस्य निष्पन्नत्वेऽपि तत्र पच्धात्वर्थो यथा पाकः, तथैव घञर्थोऽपि पाक इत्यभ्युपगन्तव्यः। उभयत्र पाकपदात् पाकरूपार्थो नाभ्युपेयते चेत्, तर्हि ''पाकं पश्य'' इत्यत्र धात्वर्थपाकस्य द्वितीयार्थकर्मत्वे नान्वयः स्यात्, यतः सुब्विभक्त्यर्थे प्रातिपदिकार्थ-

१. श.श.प्र., प्र.प्र.।
२. अष्टा. ३।३।४।

स्यान्वयो व्युत्पत्तिसिद्धः, न तु धात्वर्थस्य, निरुक्ताव्युत्पत्त्यनङ्गीकारे 'पाकम्' 'पचनम्' इत्यत्र कर्मत्वधर्मिकपच्धात्वर्थपाकप्रकारकान्वयबोधस्यापत्तिः स्यात्।

न च सुबर्थकर्मत्वादिधर्मिकधात्वर्थप्रकारकान्वयबुद्धित्वावच्छिन्नं प्रति निरर्थकप्रत्ययान्तधात्वव्यवहितोत्तरवृत्तिसुप्प्रत्ययस्य कारणत्वमभ्युपेयते चेत्, तर्हि 'पाकम्' 'पचनम्' इत्यादौ सुबर्थकर्मत्वधर्मिकधात्वर्थपाकादिप्रकारकान्वयबोधस्यानापत्तिरिति वाच्यम्।

एतद्विषये वैयाकरणः कातन्त्रपरिशिष्टकारः श्रीपतिदत्तः प्रवदति—'स्तोकः पाकः' इत्यत्र घञ्प्रत्ययानां स्वरूपार्थबोधकत्वे प्रामाणिकत्वम्। परिशिष्टकारस्तु कारकप्रकरणे 'द्वितीयाकारकविधावेकाधिकरणं धातोः' इति सूत्रवृत्तौ ग्रन्थकारेण आशङ्कितं यत् प्रथमान्तस्तोकपदार्थस्य यदि धात्वर्थविशेषणत्वं तर्हि 'क्रियाविशेषणानां कर्मत्वमेकत्वं नुपंसकत्वञ्च' इति नियमानुसारेण स्तोकपदोत्तरद्वितीयाविभक्तिमभ्युपेत्य 'स्तोकं पाकः' इति सिद्ध्यति।

वस्तुतः 'स्तोकं पचति' इति प्रयोग इव 'स्तोकः पाकः' इति प्रयोगस्यापि शिष्टत्वम्। कथं स्तोकः पाकः? कृदन्तविशेषणत्वात्, अर्थात् पच्धात्वर्थपाकांशे यदा स्तोकपदार्थस्य विशेषणत्वं तदा स्तोकं पाकः, एवञ्च घञ्प्रत्ययविशिष्टपाकशब्दोपस्थाप्यपाकांशे अर्थात् कृदन्तांशे यदा स्तोकपदार्थस्य विशेषणत्वं तदा 'स्तोकः पाकः' इति प्रयोगः।

एतदभिप्रेत्य व्युत्पत्तिवादग्रन्थे गदाधरभट्टाचार्यः प्रवदति—"न चैवम् 'स्तोकः पाकः' इत्यादावपि द्वितीयाप्रसङ्गः, तत्रापि स्तोकादेः क्रियायामेव, विशेषणत्वात्। भावकृतां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम्, क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्"।[1]

अर्थात् पच्धात्वर्थपाकस्तदंशे यदि स्तोकपदार्थस्य विशेषणतयाऽन्वयो भवति चेत्, तर्हि 'क्रियाविशेषणानाम्' इत्यादिनियमानुसारेण स्तोकपदोत्तरद्वितीयाविभक्तिर्भवति। तस्मात् 'स्तोकं पाकः', परन्तु यत्र स्तोकपदार्थस्य कृदन्तविशेषणत्वं तदा 'स्तोकः पाकः' इति।

जगदीशमते च पूर्वोक्तनियमानुसारेण 'स्तोकं पाकः' इति प्रयोगस्य साधुत्वेऽपि यत्र पच्धातूत्तरभावविहितघञ्प्रत्ययस्य निरूढलक्षणया पाकार्थबोधकत्वं तदा 'घञलौ पुंसि विज्ञेयौ' इत्यनुशासनानुसारेण पाकशब्दस्य पुंल्लिङ्गत्वमभ्युपेत्य तादृशपाकपदोत्तरप्रथमाविभक्तिं चाभ्युपेत्य 'स्तोकः पाकः' इति प्रयोगः, तात्पर्य-

१. व्युत्पत्तिवादः, पृ.३२।

भेदात् 'स्तोकं पाक:' 'स्तोक: पाक:' इत्याकारकद्विविधप्रयोगसाधुत्वविषये 'सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम्' इत्यादिकविवाक्यस्य, 'आगमो निष्फलस्तत्र भुक्ति: स्तोकापि यत्र नो' इति याज्ञवल्क्यस्मृतिवाक्यस्य च प्रामाण्यम्।

**शाब्दिकनये प्रत्ययस्वरूपं तत्खण्डनञ्च**

जगदीशस्तु स्वमते 'स्तोकं पाक:' 'स्तोक: पाक:' इति द्विविधप्रकारक-प्रयोगसाधुत्वं प्रतिपादयन् वक्ति—

'स्वोत्तरप्रत्ययार्थसाकांक्षस्यैव धातोरर्थे विशेषणतापन्नस्य बोधने तदर्थकनाम्नो द्वितीयाद्यपेक्षा न तु धातुमात्रस्य'।[१]

स्वं धातु:, तथा च स्वार्थसाकांक्षत्वस्वाव्यवहितपूर्ववर्तित्वोभयसम्बन्धेन किञ्चित्प्रत्ययविशिष्टस्य धातोरर्थे विशेषणतापन्नस्य बोधे तादृशविशेषणार्थक-नामोत्तरं द्वितीयातन्त्रं न तु धातुमात्रस्य। यथा 'स्तोकं पचति' इत्यत्र धात्वर्थपाके तिप्प्रत्ययार्थवर्तमानकालस्य विशेषणत्वम्, एवञ्च पाकरूपार्थबोधक: पच्धातुरपि उक्तवर्तमानकालबोधकाख्यातिकतिप्प्रत्ययस्य अव्यवहितपूर्ववर्ति, अतस्तादृशपाक-पदार्थस्य विशेषणबोधको य: स्तोकशब्दस्तदुत्तरं 'क्रियाविशेषणानाम्' इत्याद्यनुशासनाद् नियमतो द्वितीयाद्यपेक्षा, प्रत्ययार्थेन सह आकांक्षाशून्यक्रियाया विशेषणपक्षे तादृशविशेषणबोधकपदोत्तरं किन्तु प्रथमा भवत्येव, न तु तत्र द्वितीयाद्यपेक्षा, अत: 'स्तोक: पाक:' इति प्रयोगसाधुत्वस्वीकारात् तादृशप्रयोगस्य प्रामाणिकत्वं न तु 'स्तोकं पाक:' इति।

ननु शाब्दिकोक्तमाद्रीयते चेत् 'अपृथग्रूपक्रियाविशेषणं कर्म' इत्यनुशासने अपृथग्रूपक्रियेत्यस्य भावविहितप्रत्ययान्तभिन्नधात्वर्थपरत्वेन तत एव स्तोकं पाक इति प्रयोगवारणसम्भवेऽपि कथं निरुक्तबोधं प्रति तादृशद्वितीयाया अपेक्षितत्वमुच्यत इत्यत आह—'अपृथग्रूपक्रियाविशेषणं कर्म' इत्याद्यनुशिष्टेरपि तत्रैव तात्पर्यात्।[२] तथा च तादृशानुशासनबलादेव एतादृशापेक्ष्यापेक्षकभावलाभादिति भाव:।

ननु 'अपृथग्रूपक्रियाविशेषणं कर्म' इत्यनुशासनस्य यदि भावविहित-प्रत्ययान्तभिन्नधात्वर्थस्य विशेषणबोधकपदानन्तरं द्वितीयाविभक्तिरित्याकारक-यथाश्रुतार्थोऽभ्युपेयते चेत्तर्हि स्थलविशेषे भाववाच्यविहितप्रत्ययान्तधात्वर्थे विशेषणबोधकपदानन्तरं सर्ववादिसम्मता द्वितीयाविभक्त्यनुपपत्ति: स्यादिति चेत्, न, उक्तानुशासनस्य तात्पर्यार्थस्तु—धातूत्तरवर्ती प्रत्ययार्थेन सह साकांक्षार्थबोधको

१. श.श.प्र., प्र.प्र.।
२. श.श.प्र.; प्र.प्र.।

यो धातुस्तादृशधात्वर्थविशेषणीभूतपदार्थस्य कर्मत्वमिति, उपर्युक्त-तात्पर्यार्थस्याभ्युपगतत्वात् 'स्तोकं स्थीयते' इत्यत्र स्थाधातूत्तरभावविहितलटस्ते-प्रत्ययस्य वर्तमानकालबोधकत्वम्, 'साधु गतम्' इत्यत्र भावविहितक्तप्रत्ययात् 'चकितं द्रष्टव्यम्' इत्यत्र दृश् धातूत्तरभावविहिततव्यप्रत्ययाच्च क्रमशो भावातीत-कालस्य बोधकत्वम्। अर्थात् 'स्था, गम् दृश्'धात्वर्थः स्थितिगतिदर्शनञ्च तादृशप्रत्ययार्थेन सह साकांक्षत्वाद् विशेषणबोधकः, स्तोक-साधु-चकितादि-पदोत्तरं द्वितीयाविभक्तेः सुस्थितत्वम्। पूर्वोक्तानुशासनस्य यथाश्रुतार्थाऽङ्गीकारे च 'स्तोकः पाकः' इव विशेषणपदोत्तरं प्रथमाविभक्त्यापत्तिः स्यात्। शाब्दिकानां नये तादृशधात्वर्थस्तेक्ततव्यप्रत्ययानां कालाद्यर्थेन सह साकांक्षितत्वात् तादृशक्रिया-विशेषणगतद्वितीयाविभक्तेर्नानुपपत्तिः।

तन्मतं पर्यालोच्यते चेत्, ज्ञायते यद् भावप्रत्ययानां यदा संख्याकालादेर्वा न बोधकत्वं तदा प्रथमाविभक्त्यन्तस्तोकपदेन सह प्रथमाविभक्त्यन्तपाकपदस्य साकांक्षत्वात् 'स्तोकः पाकः' इत्याकारकप्रयोगः। प्रकृत्यर्थविशेषितत्वात्मकघञ्-प्रत्ययस्य निरर्थकत्वात् 'स्तोकं पाकः' इति प्रयोगः शाब्दिकानां नये न भवति। किन्तु भावप्रत्ययान्तधातुस्थले सर्वत्र क्रियाविशेषणपदानन्तरं प्रथमाविभक्ति-र्भविष्यतीत्यत्र मानं नास्ति, यतः 'स्तोकं स्थीयते, साधु गतम्, चकितं द्रष्टव्यम्' इत्यादौ भावप्रत्ययान्तस्य क्रियाविशेषणत्वेऽपि 'क्रियाविशेषणानां कर्मत्वमेकत्वं नपुंसकत्वञ्च' इत्याकारकानुशासनानुरोधेन तत्तत्पदोत्तरकर्मत्वबोधकद्वितीयाविभक्ते. स्वीकारः।

भावप्रत्ययान्तक्रियाविशेषणस्थले कदाचित् प्रथमाविभक्तेः कदाचिच्च द्वितीयाविभक्तेर्वा कथं न स्वीकार इत्याकांक्षायां शाब्दिकाः प्रवदन्ति—यत्र भावविहितप्रत्ययानां संख्याकालाद्यर्थे शक्तत्वं वर्तते तादृशस्थले उक्तप्रत्ययार्थानां धात्वर्थे विशेषणतयाऽन्वयः, तादृशधात्वर्थक्रियाविशेषणबोधकप्रातिपदिकानन्तरं द्वितीया भवति, अर्थात् तत्र कर्मत्वस्य एकत्वस्य नपुंसकत्वस्य च स्वीकारः।

पुनश्च यत्र भावप्रत्ययान्तक्रियाविशेषणस्थले भावप्रत्ययान्तधातौ यल्लिङ्गं या संख्या च दृष्टा स्यात्, तादृशसंख्याया अपि भावप्रत्ययान्तक्रियाविशेषणपदेन च विवक्षा स्यात्, यथा—'स्तोकः पाकः', 'स्तोका भुक्तिः' इत्यादिप्रयोग-साधुत्वेऽपि 'स्तोकं पाकः' इत्यादिप्रयोगस्य न साधुत्वमिति यच्छाब्दिकाः प्रवदन्ति, तन्न साधुः, पूर्वोक्तरीत्या जगदीशमतमवलम्ब्य उभयविधं प्रयोग-साधुत्वमभ्युपेयम्।

**भर्तृहरिमते प्रत्ययलक्षणं तत्खण्डनञ्च**

वाक्यपदीयग्रन्थे भर्तृहरिणा प्रकृतेः प्रत्ययस्य च लक्षणं कृतं यत्—

"यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने ।
यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः" ।।

तदर्थश्च 'यः शब्दः स्वाभिन्नयच्छब्दस्य यादृशार्थधर्मिक-यादृशार्थप्रकारकान्वयबोधे यादृशशब्दसाकांक्षः, तयोर्मध्ये पूर्वशब्दतादृशार्थे प्रकृतिः, परशब्दः प्रत्यय इत्यर्थः।[१] प्रथमं यत्पदं स्वपदञ्च प्रकृतित्वेनाभिमतपरं, द्वितीयं यत्पदं प्रत्ययत्वेनाभिमतपरं, तृतीयं यत्पदं प्रत्ययपरम्। 'घटः' इत्यादि-वाक्यजन्य-एकत्ववान् घट इति बोधमादाय लक्षणं सङ्गमनीयम्; परन्तु इदं लक्षणं 'बहुगुडो द्राक्षा' इत्यत्र बहुजादौ अतिव्याप्त्यव्याप्तिभयेन तल्लक्षणमुपेक्षितम्—

'तद्बहुजादावव्याप्त्यतिव्याप्तिप्रसङ्गादुपेक्षितम्।'[२]

**उमापतिदत्तमतखण्डनम्**

उमापतिदत्तानुसारेण प्रत्ययलक्षणं यत्—

स्वेतरार्थानवच्छिन्नस्वार्थस्यान्वयबोधने ।
योऽसमर्थः सैष शब्दः प्रत्ययोऽयं चतुर्विधः ।।

तदर्थश्च—यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिज्ञानजन्य-स्वार्थान्योपस्थित्यप्रयोज्ययादृशस्वार्थनिष्ठप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्न-विशेष्यताशालिशाब्दत्वव्यापकजन्यतानिरूपितजनकतानवच्छेदकं तादृशानुपूर्वी-मच्छब्दत्वं तादृशार्थकप्रत्ययत्वमिति, प्रत्येकपदव्यावृत्तिस्तु पूर्ववदवसेया, एष च प्रत्ययः सुप्तिङ्कृत्तद्धितभेदाच्चतुर्विधः, तदप्ययुक्तम्; यतः 'चैत्रेण ग्रामो गम्यते' इत्यत्र गम्धातूत्तरविहिताख्यातिक-'ते'प्रत्ययस्य यथा कर्मबोधकत्वं तथैव संख्यावर्तमानकालरूपार्थस्य च बोधकत्वम्। विविच्यते चेत्, ज्ञायते यत् 'ते'-प्रत्ययार्थस्य कर्मत्वस्य चैत्रीयगत्यात्मकक्रियया विशेषितत्वेऽपि संख्याया वर्तमानकालत्वस्य वा पदार्थान्तरेण सह अविशिष्य क्रमश ग्रामे गतिक्रियायां विशेषणरूपेण भासमानत्वम्, अत उक्तामादिप्रत्ययानां तिङ्प्रत्ययस्य च स्वभिन्न-पदार्थेन सह अविशिष्य स्वकीयार्थबोधं प्रति असमर्थत्वाभावाद् अमादिप्रत्ययेऽ-व्याप्तिः, अत उमापत्युक्तप्रत्ययलक्षणमुपेक्षणीयं भवति। प्रतिपादितं च जगदीशतर्कालङ्कारैः—

१. वाक्यपदीये; २. कृष्णकान्ती टी, पृ.५०; १. श.श.प्र., पृ.५०।

"तदप्ययुक्तम्, सुप्तिङोः पदार्थान्तरानवच्छिन्नस्वार्थसंख्यादिप्रकारकबोध-समर्थत्वेन तयोस्तव्यादौ चाव्याप्तेः। 'सैष' इत्यत्र लुप्तविभक्तिकस्यापि सस्य पादपूरणे पुनः सन्धिः, 'सैष दाशरथी रामः' इत्यादिवत्"।[१]

पूर्वोक्तप्रत्ययलक्षणे प्रकृतिभिन्नत्वस्य प्रवेशः, उक्तभेदस्य प्रतियोगितावच्छेदकं प्रकृतित्वम्, तच्च गुरुभूतम्, तादृशगुरुधर्मघटितप्रत्ययलक्षणमुपेक्ष्य तदघटितलघुलक्षणमुच्यते जगदीशतार्किकैः—

"इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।
तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते" ।।

तथा च 'यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिज्ञानजन्योपस्थितिप्रयोज्यावच्छेदकत्वानिरूपकयादृशस्वार्थनिष्ठविशेष्यतानिरूपिततिङर्थप्रकारताशालिशाब्दत्वव्यापकजन्यतानवच्छेदकं निभादिनिपातभिन्नत्वे सति तादृशानुपूर्वीमत्त्वं तादृशार्थकप्रत्ययत्वमिति पर्यवसितार्थः।'[२] चैत्रादिप्रातिपदिके यजादिधातौ अतिव्याप्तिवारणाय इतरार्थानवच्छिन्नत्वं स्वार्थविशेषणम्। 'पचति' इत्यादौ पच्-धात्वर्थो यो हि पाकस्तद्विशेषिततिप्प्रत्ययार्था या कृतिस्तत्र तिङर्थ-वर्तमानत्वस्यान्वयः, यतः प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्, अन्यत्सर्वं पूर्वोक्तरीत्याऽवगन्तवयम्।

**निपातस्वरूपम्**

प्रकृतिप्रत्ययस्वरूपनिरूपणानन्तरं क्रमप्राप्तं निपातस्वरूपं लक्षयति जगदीशः—

"स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयक्षमः ।
सुबाद्यन्यो निपातोऽसौ विविधश्चादिभेदतः" ।।[३]

तदर्थश्च—यः शब्दः केवले यादृशस्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधं प्रति असमर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः स तादृशार्थे निपातः। सुबाद्यात्मकप्रत्यये निपातलक्षणस्यातिव्याप्तिवारणाय निपातलक्षणे सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नत्वं निवेश्यम्। तथा च—यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिरवज्ञानजन्योपस्थितिप्रयोज्यावच्छेदकत्वनिरूपितस्ववृत्तिज्ञानजन्योपस्थितिप्रयोज्ययादृशार्थविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारता-

१. श.श.प्र., पृ. ५१।

२. श.श.प्र., कृष्णकान्ती टीका; ३. श.श.प्र., का. ११।

शालिशाब्दत्वव्यापकजन्यतानिरूपितजनकतावच्छेदकमेवम्भूतं यद्यत् स्वं तादृशार्थकतत्तदन्यत्वे सति सुबादिभिन्नत्वे च सति तदर्थसार्थकत्वं तादृशार्थकनिपातत्वमिति पर्यवसितम्।

निपातलक्षणे सार्थकत्वस्य प्रविष्टत्वात् शप्स्यनादिविकरणप्रत्ययादौ तादृशसुबादिभिन्नत्वस्य निवेशत्वेऽपि नातिव्याप्तिः। 'स्मृतः समुच्चयः' इत्यादिस्थलीयतादृशानुपूर्वी समुच्चयपदेन गृहीतं भवेत्। तादृशानुपूर्वीविशिष्ट-भिन्नत्वस्यापि च-वेत्यादिनिपातेऽवश्यम्भावित्वम्। तथा च चादिनिपाताः स्वकीयार्थसमुच्चयादिं विशेष्यत्वेन सङ्गृह्य न कस्यापि नामार्थनिष्ठाभेदसंसर्गा-वच्छिन्नप्रकारताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति समर्था भवन्ति। 'स्मृतमनुभूतञ्च' इत्यादिवाक्याद् अभेदसम्बन्धेन स्मृतः समुच्चय इत्याकारकान्वयबोधो न कस्यापि भवति। अपि च तादृशनिपातपदघटितवाक्यस्थले स्मृतानुभूतविषयकसमुच्चय इत्याकारकबोधो भवति। अर्थात् समुदायं विषयित्वेनाभ्युपेत्यान्वयबोधो भवति। तस्माच्चादिनिपाते लक्षणसङ्गतिः।

'स्तोकं पचति' इत्यत्र स्तोकपदार्थस्य पच्धात्वर्थे पाके विशेषणत्वम्। 'क्रियाविशेषणानां कर्मत्वमेकत्वं नपुंसकत्वञ्च' इत्याकारकनियमानुरोधात् स्तोकपदानन्तरं तत्र तत्र कर्मत्वार्थकद्वितीयाविभक्तेर्विधानम्। तत्र च कर्मत्वं न मुख्यकर्मत्वमपि च भाक्तकर्मत्वम्, अर्थात् पच्धात्वर्थपाके स्तोकपदार्थस्य अभेदसम्बन्धे नान्वयबोधतात्पर्यग्राहकत्वात्तत्र द्वितीयाविभक्तेरुपयोगित्वम्। तथा च 'स्तोकाभिन्नपाकानुकूलकृतिमान् चैत्रः' इत्याकारकान्वयबोधः 'चैत्रः स्तोकं पचति' इति वाक्याद्भवति। उक्तं च—

''स्तोकं पचतीत्यादौ धातुरपि स्वार्थे नामार्थस्य तादात्म्यं बोधयंस्तत्समर्थ एव प्रत्ययास्तु सुबादिरेव। 'चः शब्दः' इत्यादौ नामार्थस्याभेदसाकांक्षश्चकारादिः स्वपरतायां न निपातः, किन्तु नामैव। पुरन्दरप्रभृतौ तु नाम्नि निपातव्यपदेशः सूत्रानिष्पाद्यत्वप्रयुक्तो भाक्तः''।[1] इति।

●

१. श.श.प्र., पृ. ५५।

लघु-ग्रन्थमाला

[ ५९ ]

# विशुद्धवैभवं महाकाव्यम्

प्रणेता

**पण्डितश्रीमनुदेवभट्टाचार्यः**
उपाचार्यः, व्याकरणविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी




**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**

**वि.सं. २०५८**

# सम्पादकीयम्

अथेह प्रस्तूयते विदुषां पुरस्ताद् '**विशुद्धवैभवम्**' नाम द्वादशसर्गात्मकं महाकाव्यं मत्प्रणीतम्। प्रायो महाकाव्यादिकं नायकनायिकानदी-समुद्रोपवनविहारर्तुवर्णनादिभूयिष्ठं भवतीति सार्वजनीनम्, परमिदं खलु विवेकानन्दचरित-महर्षिज्ञानानन्दचरितादिवद् महाकाव्यमिति वेदितव्यम्। अत्र प्रातःकालसूर्योदय-सरोवर-वनादिवर्णनसत्त्वेऽपि योगिराजचरितमेव प्राधान्येन वर्णितमिति।

एतद्वचनस्य बीजमिदं भवति, यत्प्राचीनवाङ्मयेषूपाचरितमृषिजीवनं यत्र तत्र बहुत्र सर्वत्र प्रायो दृश्यते, यथा—अगस्त्यचरितम्, पराशरचरितम्, व्यासचरितं वा, साम्प्रतं तथा सम्भवति न वा? अन्यथा ऋषीणामद्भुतमलौकिकं चरितं कपोलकल्पितमिति बहव आहुः, मया श्रीमद्गुरुचरण-**महामहोपाध्याय-श्रीगोपीनाथकविराज**महोदयानां सविधे यदा जिज्ञासितम्—'यद्यत्वे संस्कृतमधीत्यापि कथं न पुराणादिषूक्तः सामर्थ्यातिशयोऽधिगन्तुं शक्यते'? तदुत्तरे तैः शास्त्रप्रतिपादिता साधनाप्रणाली निरूपिता। साधनाप्रक्रियामन्तरा शास्त्रोक्तविधिनिषेधप्रकारा नैवाधिकर्तुं शक्या इति हि तेषां समयः।

ततो लब्धेऽवकाशे मयकाऽसकृत्पृष्टास्ते स्वगुरुचरणानां **श्रीमद्विशुद्धानन्द-परमहंस**देवानां जीवनम्, गुरूपलब्धिः, साधनालाभः, साधनाप्रणाली, साधनाऽधिगम इत्यादयो विश्वेऽपि विषया निर्विशया उपदिष्टाः, मया च सुदुर्लभतरमिति ज्ञायं ज्ञायं सर्व सङ्ग्राहं सङ्ग्राहं स्वरसनापावनाय महाकाव्यमदोऽरचीत्यवितथं तथ्यम्।

अस्मच्चरितनायका विशुद्धानन्दपरमहंसाः पूर्वाश्रमे **भोलानाथचट्टोपाध्याय-**नामभाज आसन्, दीक्षानन्तरं विशुद्धानन्देति नामालभन्तेति।

**महाकाव्यकथासङ्क्षेपः**

**प्रथमसर्गः**—भारतवर्षस्य पूर्वस्यां दिशि वङ्गप्रान्ते वर्धमानजनपदे वण्डुलग्रामे काश्यपगोत्रीय-सामवेदीयकौथुमशाखीयपण्डितश्रीमदखिलचन्द्र-चट्टोपाध्यायः श्रीराजराजेश्वरी देवी च गार्हस्थ्यं पालयन्तौ ससुखमूषतुः, तयोर्द्वौ

पुत्रौ चन्द्रनाथः, भोलानाथश्च। द्वितीयो भोलानाथ एव एतत्काव्यनायको योगिराजाधिराजो विशुद्धानन्दनामा ख्यातो बभूवेति। अदसीयं जन्म तु २१।३।१८५६ ई. वर्षे जातम्। वङ्गाब्दस्तु महाकाव्ये स्पष्टः।

**द्वितीयसर्गः**—सोऽयं भोलानाथो बाल्य एवाद्भुत आसीत्, पिताऽखिलचन्द्रोऽस्य बाल्य एव स्वरारुरोह, पितृव्येन पालितोऽयम्, कदाचिदस्य मित्रस्य रुगप्यनेन निरस्ता। बाल्यादेव संस्कृतेऽस्य महत्यनुरक्तिरासीत्। गृहस्थितदेवतैः सहास्य भक्त्यतिशयोद्रेकादभिमानादिकमपि यदा कदा भवति स्म, तदैव विभूतिप्रकाशोऽप्यभवदिति।

**तृतीयसर्गः**—अनेन नवद्वीपे शास्त्राण्यधिगतानि, तदैव च पितृव्यवियोगोऽप्यभवत्, पश्चाज्जाते मौञ्जीबन्धसंस्कारे ग्रामस्थमन्दिर एव विग्रहे देवदर्शनप्रभृत्यद्भुतोपलब्धिरभवत्, तदानीमेव मृत्युतोऽयं मातरं स्वविभूत्या ररक्ष। निस्पृहता तु बाल्यादेवास्य सिद्धा, सहैव वैराग्यमपि। तदानीमेव ग्रामसमीपस्थश्मशाने अभयानन्दपरमहंसमहोदयानां दर्शनमजायत, अयं परमहंसोऽपि ज्ञानगञ्जीय एव। तदानीं कदाचिदयमलर्केण दष्टः, चिकित्साभावाच्चिन्तितोऽभवत्।

**चतुर्थसर्गः**—अलर्कविषदन्दह्यमानमानसोऽयं मर्तुमना गङ्गामुपागतस्तत्रैव केनचन परमसिद्धेन विषान्मुक्तः, तमेव गुरुत्वाय प्रार्थितवान्, स चास्मै बीजमन्त्रं दत्त्वा गतः, पुनश्च कालान्तरे सम्प्रति बांग्लादेशराजधानीं ढाकां गत्वा, सिद्धयोगीन्द्रं लब्ध्वा, जननीमाश्वास्य, गृहं परित्यज्य समित्रो विन्ध्याटवीमागतः, तत्र सिद्धयोगीन्द्रः क्वचिद् गतः, एकाकिनौ तौ रुदन्तौ आस्ताम्, तदानीं श्यामा भैरवी कृपया तत्रागत्य इमौ आश्वासितवती, पश्चाच्च नीमानन्दपरमहंसेन इमौ ज्ञानगञ्जनामकं तिब्बतप्रदेशस्थमानससरोवरान्तस्थितं सिद्धाश्रमं प्राप्तौ।

**पञ्चमसर्गः**—इतः परं सिद्धभूमिसाधनाप्रभृतिवर्णनम्, यथा—सिद्धभूमिः कथं भवति? ज्ञानगञ्जस्यापि सिद्धभूमित्त्वम्, सिद्धभूमीनामपार्थिवत्वेऽपि पार्थिवत्वरूपम्, ज्ञानगञ्जस्यापि पार्थिवत्वम् , योगिवृत्तम्, परमहंसमहातपोवर्णनम्, महातपा एव सर्वेषां गुरुः, तस्य शिष्येषु वरिष्ठो भृगुरामपरमहंसः, अयं विशुद्धानन्दस्य ज्येष्ठो भ्रातेवासीत्।

**षष्ठसर्गः**—षष्ठोऽयं सर्गः साधनावर्णनात्मक एव। सर्गेऽत्र ज्ञानगञ्जस्वरूपं किम्? साधनालाभः कथम्? नाभिधौतिप्रक्रिया का? किरातधौतिप्रक्रिया च का?

इत्यादिकान् सर्वान् विषयान् वर्णयित्वा योगिराजस्य विशुद्धानन्दपरमहंसदेवस्य मातृभक्तिर्वर्णिता।

**सप्तमसर्गः**—अस्मिन् सर्गे योगाभ्यासप्रक्रिया, योगाभ्यासेन समुद्भूतसिद्धयश्च वर्णिताः, प्रक्रिया चैषा ज्ञानगञ्जीययोगिभिराविष्कृतेति मन्तव्यम्। एवञ्च ज्ञानगञ्जाश्रमः, तत्रत्यसाधना, ज्ञानविज्ञानयोर्भेदः, उभाभ्यां सृष्टौ भेदः, स्फोटवादरहस्यम्, सूर्यविज्ञाने रश्मिपरिचयः, इच्छाशक्तिपरिचयः, इच्छाशक्त्या सृष्टेर्भेदः, साधनाया उत्कर्षे नाभिधौतिकिरातधौतिसम्प्राप्तिः, ततः किरातधौतिकिरातकुम्भकलाभः, एवञ्च कुण्डलिनीं जागरयित्वा सर्वान्ते चात्वरयोगराजप्राप्तिरप्येतत्सर्वं गुरुमुखादाकर्ण्य वर्णितं तत्कृपयैवेति मन्तव्यम्।

**अष्टमसर्गः**—भौमज्ञानगञ्जस्य सम्पूर्णवर्णनम्, तत्रत्यसाधनाया विशेषाः, श्रीविशुद्धानन्दकर्तृकः साधनाभूम्याविष्कारश्चेति विषयाः सङ्क्षिप्य वर्णिता इति बोध्यम्।

**नवमसर्गः**—सर्गोऽयमतीव काव्यात्मकः। प्रायो महाकाव्येषु कश्चिदेकस्तादृशः सर्गो भवति, यत्र शब्दचमत्कारा भूयस्तरां लभ्यन्ते, यथा महाकविकालिदासस्य रघुवंशमहाकाव्यस्य नवमे, यथा वा शिशुपालवधमहाकाव्यस्य षष्ठे इति सार्वजनीनमेव महाकविसम्प्रदायसिद्धम्, तदेवं महाकविसम्प्रदायपारम्परीमनुसृत्य विशुद्धवैभवमहाकाव्येऽपि नवमोऽयं सर्गस्तादृश एव, अत्र श्लोकेषु प्रतिचतुर्थपादं यमकम्। प्राय ईदृशे चमत्कारे चिकीर्षिते द्रुतविलम्बितं छन्द आश्रीयत इति दर्शं दर्शं मयकाऽपि तदेव च्छन्द आश्रितम्। सर्गेऽत्र अप्सरोदर्शनात् परमात्मनो भावं सङ्गोप्य शरणीकृतगुरुचरणस्य विशुद्धानन्दस्य कामजयमन्त्रलाभः, तत्प्रसङ्गे च प्रातर्वर्णन-सरोवर्णनप्रभृति कवयित्वा, खण्डिताङ्गुलिपूरणम्, अथ च दुर्लभहरिहरशिवलिङ्गप्राप्तिश्च वर्णितम्। हरिहरशिवलिङ्गस्य प्रतिष्ठा वण्डुलग्रामे पश्चादभवत्, अद्यावधि प्रतिदिनं तद्वर्णपरिवर्तनं भवतीतिं चित्रम्।

**दशमसर्गः**—सर्गेऽत्र स्वगुरोराज्ञया विशुद्धानन्दपरमहंसदेवस्य पर्यटनव्याजेन भुवो भ्रमणमवर्णि, तत्प्रसङ्गे वाराणसीदर्शनम्, मातृदर्शनम्, अथ च ज्येष्ठसहोदरानुरोधात् परलोकात् स्वपितुरानयनम्, भ्रातुश्च रक्षा, ग्रामं समुष्य बहूनामारोग्यकरणमित्यादि वर्णितम्। प्रसङ्गेऽत्र मातृकर्तृकस्तद्विवाहचिन्ताऽप्यवर्णीति शम्।

**एकादशः सर्गः**—श्रीभोलानाथचट्टोपाध्यायस्य (श्रीविशुद्धानन्दयोगिनः) श्रीकृष्णभामिन्या सह विवाहः, श्वसुरालये सर्पदंशनजन्यविषप्रभावाद् शिवालये योगक्रियया मुक्तिः, ज्येष्ठसतीर्थ्यश्रीभृगुरामपरमहंसकर्तृको गार्हस्थ्योपदेशः,

पुत्रप्राप्तिः, वण्डुलग्रामे हरिहरशिवस्थापना, भैरवक्रोधतः पत्न्या मोक्षश्चेति सर्वमवर्णि।

**द्वादशः सर्गः**—'गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्त्ति हि' इत्यभियुक्तोक्त्या—

'अस्य काव्यस्य कवयो न समर्था विशेषणे।
साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः'।। इति।

महाभारतीयादिपर्वोक्तद्वैपायनवचनाच्च योगिनोऽस्य महोदयस्य गार्हस्थ्य-साधना, अपात्रकर्तृकसाधनादर्शननिषेधः, प्रसङ्गाच्च विश्वविख्यातवैज्ञानिकेन्द्र-जगदीशचन्द्रवसुप्रसङ्गः, वैदिकविज्ञानाविष्कारकश्रीमधुसूदनविद्यावाचस्पतिप्रसङ्गः, अस्मद्गुरुवर्यश्रीगोपीनाथप्रसङ्गश्च वर्णिताः, ततः काश्यां विशुद्धानन्दकाननाश्रम-प्रतिष्ठाम्, नाभिपद्मदर्शनप्रसङ्गञ्च वर्णयित्वा काव्यसमाप्तिरिति बुधेलिमम्।

**योगजन्यविभूतिप्रकाशः**—यदाऽयं तिब्बतस्थमानससरोवराभ्यन्तरालस्थित-ज्ञानगञ्जाश्रमे दीक्षितस्तदा द्वादशवर्षाणि यावत्तपो विहितवान्, दीक्षानन्तरमेव विशुद्धानन्देति नामप्राप्तिः। योगारूढोऽयं अगस्त्य इव, वशिष्ठ इव, विश्वामित्र इव, पराशर इव, व्यास इव, याज्ञवल्क्य इव सर्वलोकातिशायिनीं शक्तिं लेभे, आतश्च अलौकिकचमत्कारविभूतयः सर्वत्रानेन प्रदर्शिताः, तेन देशे विदेशे ख्यातयः प्रसृताः, अत एव ब्रिटेनस्थः पत्रकारः पॉलब्रंटनो भारतं यदाऽऽजगाम, तदा अन्विष्य अन्विष्य योगिजनान् बहूनि तथ्यानि सञ्जग्राह; परन्तु तत्र तत्रापरितुष्यमाणः श्रीविशुद्धानन्दसमीपमुपाजगाम, श्रीविशुद्धानन्देन च बहवो विभूतिचमत्कारा दर्शिताः, यथा—पॉलब्रंटनमहोदयस्य कौशेयकर्पटे चम्पकसुगन्धानयनम्, ततस्तत्रैव पाटलसुगन्धानयनम्, न केवलमियदेव, एकस्य मृतस्य पक्षिणो पुनरुज्जीवनम्, नभसि हस्तौ भ्रामयित्वा द्राक्षामिष्टान्नप्रभृत्यानयनम्, सर्वेषां पश्यतामेव हठादेव प्रकोष्ठतोऽन्तर्धानम्, पुनश्च एकदैव द्वयोः स्थानयोः स्थितिः, पर्युषितस्य पुष्पस्य प्रत्यग्रकरणम् इत्यादयो बहवो योगजन्यविभूतिप्रकाशितचमत्कारमणिमालास्तैरसकृदनेकत्र प्रदर्शिताः।

पुराणवाङ्मये ब्रह्मणो नाभिपद्मवर्णनमस्माभी रागादङ्गीक्रियते, श्रीविशुद्धानन्दमहोदयैर्भक्तजनानुरोधेन स्वनाभितः पद्मं प्रकटय्य सर्वसमक्षं दर्शितम्, वर्णितञ्चैतदन्तिमसर्गान्तेऽत्रापि। बहूनां भक्तजनानां सेवाकाले प्रोन्नतयोऽप्यनेन साधिताः। वर्धमाननगरवास्तव्य उपेन्द्रचौधुरी अपि तदन्यतम इत्यश्रावि मयका श्रीगुरुचरणमुखाम्भोजतः। अस्मद्गुरुचरणानां धर्मपत्नी श्रीकुसुमकामिनी देव्यासीत्,

सा कदाचिद् विषमरोगज्वालावलीलीढाऽभवत्, न च चिकित्सकैः किमपि कर्तुमपार्यत, चिन्तितैर्गुरुचरणैः स्वगुरवः श्रीविशुद्धानन्ददेवाः स्मृताः, तैश्च अव्यक्तैस्सद्भिरेव स्वास्थ्यं तस्यै प्रादायीति, घटनेयम् ऊनविंशत्यधिके त्रिंशदधिके वा एकोनविंशतिशततमे ख्रीष्टवर्षेऽजायतेति श्रूयते। एवमेव कदाचिद् निमिषमात्रेण कोलकातातो वाराणसीमागत्य महाञ्चमत्कारः कृतः। एतच्च सूक्ष्मशरीरमाश्रित्यापि देशकालव्यवधानं व्यतीत्य साधयितुं शक्यमिति गुरुवर्यैरहमुपदिष्टः, वर्णितञ्चैतदमुष्मिन् काव्येऽपि।

'परकीयमनोगतविषयज्ञानम्', 'अनेकदूरदर्शनम्', 'नभसि सशरीरगतिः' इत्यादिसिद्धयो योगिनां करामलकायमाना इत्यत्र विशुद्धानन्दचरितमेव प्रमाणमित्यत्रेदं महाकाव्यं निर्विशयं चकास्ति।

परमहंसत्वलाभात्पूर्वं तीर्थस्वामीति नामादसीयमासीत्, तदानीमेव गृहस्थस्सन् चिकित्सादिना लोका उपकृता एभिः। यद्यपि सप्तत्रिंशदधिकैकोनविंश-शततमे ख्रीष्टवर्षे भवानीपुरे एभिर्भगवत्सायुज्यमलम्भि, तथाऽपि अमुष्मिन् महाकाव्ये तन्नावर्णि, स्थूलशरीराभावेऽपि योगिनां सिद्धदेहवत्तया स्थूलदेहमात्रत्यागात्मकमरणस्यायोगादिति मदीया दृष्टिर्बोध्या।

**कृतज्ञताप्रकाशः**

एतन्महाकाव्यरचनाप्रसङ्गे सर्वादौ मातापितॄन् सकलसतीशिरोमणि-**श्रीवीणापाणिदेवी**-निखिलतन्त्रापरतन्त्रपण्डित**श्रीपशुपतिभट्टाचार्यान्** शिरसा नंनम्ये, याभ्यामहमस्मिन् कलौ रिक्थलोभं न्यक्कृत्य संस्कृतं पाठित इति भूय एव नम्रीभूय भूयसीं समनस्कारनमस्कारसुमनोमल्लीवल्लीमतल्लीं निवेद्यात्मन आधमर्ण्यं पुरस्करोमि। पूज्यपादगुरुचरणानां **श्रीगोपीनाथकविराजमहोदयानां** न केवलमयमेव; अपि तु निखिलमेव विद्वद्वृन्दं साधकवृन्दञ्च न्यक्षेण सर्वथाऽधमर्णमेव, तेभ्यो भूयस्तरां सदातरां नमस्तरां सनातरां समर्प्य आत्मानं कृतार्थयामीत्यवितथं तथ्यमिदमिति यत्किञ्चिदेतत्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयोऽयं विश्वस्य विश्वस्य विदुषामेकास्पदं पदं चकास्तीति निर्विशयो विषयोऽस्तीति सत्सम्मतं मतं हि विलसतीति निर्विवादो वादो बोभुवतीत्यतो विश्वविद्यालयोऽप्येष मयकाऽसकृन्नंनम्यते।

अत्रत्या वर्तमानाः श्रीमन्तो वेदान्तोदन्तदान्तनितान्तशान्तस्वान्ताः कुलपतयः **प्रो.राममूर्तिशर्ममहाभागाः** संस्कृतजगतः सर्वस्यापि प्रतीक्ष्या इति यथाश्रद्धं ते पौनःपुन्येन प्रणम्यन्ते।

वेदवेदाङ्गसङ्कायाध्यक्षाः **श्रीमन्त उमाशङ्करशुक्ल**महोदयाः, व्याकरण-विभागाध्यक्षा **डॉ. श्रीश्रीकान्तपाण्डेयमहोदयाश्च** नितरां प्रणम्यन्ते, अन्ये च सङ्कायाध्यक्षाः, विभागाध्यक्षाः, व्याकरणविभागीयाश्च समेऽपि अस्मन्मित्राणि आ च आचार्येभ्य आ च प्राध्यापकेभ्योऽध्यापकाः प्रणम्यन्ते।

इतः परं प्रकाशननिदेशका अहर्निशं विश्वविद्यालयीयं समस्तं कार्यजातं साधयन्तः प्रकाशनप्रकाशतोऽधिविश्वं विश्वविद्यालयममुं प्रकाशयन्तः सन्तो विद्यावारिधि**पण्डितश्रीहरिश्चन्द्रमणित्रिपाठिमहोदया** नितरामभिनन्द्यन्ते, येषा-मत्युत्साहस्नेहनिगडितोऽहं महाकाव्यमदः प्रकाशनायाददाम्।

अनुसन्धाननिदेशका नैयायिकनाकनायका विद्यावारिधि**पण्डितश्रीराजाराम-शुक्ल**महेच्छा अपि सततं धन्यवादास्पदम्, यदीयमानुकूल्यमहमहो सदैव शिरसा बिभर्मि।

एतकत्काव्यं श्रोतारो योगतन्त्रविभागाध्यक्षचरपण्डित**श्रीव्रजवल्लभद्विवेद**-इन्दिरागान्धीकलाकेन्द्रसम्मानिताचार्य**पण्डितश्रीहेमेन्द्रनाथचक्रवर्ति**-हिमाचलप्रदेशस्थ-केन्द्रीयसंस्कृतविद्यापीठप्राचार्यविद्यावारिधि**श्रीहिन्दकेशरिशास्त्रिणो** महानुभावा अपि प्रसङ्गेऽत्र सविनयं स्मर्यन्ते, यैर्ममोत्साहो वर्धितः।

विक्रयाधिकारिणः **श्रीपद्माकरमिश्र**महोदयाः, अथ चानुसन्धान-प्रकाशनसंस्थानयोः सर्वेऽपि सहायकाः सहृदया असकृद् धन्यवादास्पदम्।

श्रीजीप्रिण्टर्ससञ्चालकाः **श्रीमन्तोऽनूपकुमारनागराः** श्रद्धासागरा मुद्रका अपि सततं धन्यवादास्पदम्।

अन्येभ्योऽपि सर्वेभ्यः प्रणामाञ्जलीन् समर्प्य, महाकाव्यपुष्पस्तवक-स्तवकन्दममुं भक्तिनम्रेण चेतसा श्रीश्रीमद्भवानीविश्वनाथचरणाब्जेषूपहृत्य, दोषभूयिष्ठाऽपीयं कृतिर्दोषज्ञानां खर्जूरपिण्डप्रकाण्डैरुद्वेजितानां तिन्तिड्यां प्रवृत्तिरिव मनोमोदायाऽलं स्यादिति निवेद्य, पुनरपि सर्वान् भूयस्तमां सदातमां नमस्तमां कुर्मस्तमामित्युक्त्वा विरमामीति शम्।

**वाराणसी**
गुरुपूर्णिमा,
वि.सं. २०५८

श्रीश्रीमद्गोपीनाथकविराजमहोदयानां
चरणधूलिः
**मनुदेवभट्टाचार्यः**

।। श्रीः ।।

# अनुक्रमणी

श्रीमनुदेवभट्टाचार्यविरचितं

# विशुद्धवैभवं महाकाव्यम्

## प्रथमः सर्गः

स्व-प्रभूत-प्रभावौघ-वशीकृत-जगत्त्रये ।
विशुद्धानन्द-योगीन्द्रे मोमुदीतु मनो मम ।।१।।

आजन्माऽभ्यस्त-योगोद्भव-भव-जय-सामर्थ्यवश्य-प्रपञ्चः
स्वैश्वर्याम्भोधि-रत्नोपहसित-विबुधव्रात-तेजोनिदानः ।
श्रीश्रीमद्भारतीयागमगदित-महासिद्धि-विद्याहिमाद्रि-
ध्रीराधीशैकवन्द्यो जगति विजयते योगिराजाधिराजः ।।२।।

समाधिस्थैर्योगीश्वर-वरचर्यैर्याऽप्यविदिता
नमल्लेख-श्रेणी-कुसुमनिचयाऽऽचर्चित-पदा ।
निमेषोन्मेषाभ्यां जगदवनसंहारकुशला
परम्बा सा दुर्गा सपदि मयका नम्यत इह ।।३।।

स्वपत्पद्माभ्यां कोकनदयुगलं निन्दितवती
नखज्योत्स्नाजालैर्हिमकरकरास्ते गतरुचः ।
रणन्मुग्धश्रीनूपुररववरो हंसरुतजित्
कथं मातः स्तोतुं प्रभवतु जनः कोऽपि भवतीम् ?।४।।

यदीयाभिर्मूकोऽपि च भवति वाग्मी सपदि सा
कृपाभिर्वाग्देवी गुणगणगरिष्ठा विजयते ।
अयं यन्नेत्राम्भोजयुगल-कटाक्षाऽऽगतमतिः
कथाव्याजेनाद्येह निजरसनां पावयतकि ।।५।।

नमत्सङ्ख्यावद्-धूर्धरचयशिरस्पृष्टचरणो
दिवारात्रं शास्त्राम्बुनिधि-परिचिन्ताचयमचणः ।
तथा मूला-धाराच्छतदल-शिरः-पद्ममविता-
प्यसौ गोपीनाथः सुकृतिकुलनाथो विजयते ।।६।।

कदाऽयं गोपीनाथ-चरणसरोजातिनिकटे
वसन्ध्यायन् शश्वद्विविधविध-शास्त्राणि च पठन् ।
मुहुस्तद्वक्त्राम्भोरुहगलित-तत्त्वामृत-कणं
निजश्रोत्रद्वन्द्वाञ्जलि-कुहरकैः पास्यति जनः ।।७।।

यदाज्ञप्तस्तूर्णं सपदि मनुदेवो विगतधी-
रयं वीणापाणौ पशुपति-बुधाल्लब्धजननः ।
परं वाक्चापल्या अहह कुरुते किञ्चिदपि तत्
पुरे पूते शंम्भोः स्वहृदय-रजोमार्जन-मनाः ।।८।।

क्व योगिव्रातेन्द्रोऽखिल-भुवनजेता स्वबलतो
विशुद्धानन्दोऽसौ श्रुतिचयरहस्यामृत-निधिः ?
महामोहाऽघौघद्रुतदलित-संवित्कणलव-
प्रभूताऽज्ञानाऽऽच्छन्न-गतसरणिः क्वैष च मनुः ?।९।।

तथाप्येतद् यन्मां मुखरयति वक्तुं किमपि तु
कृपां मन्ये मातुः सकलगिरि-राजैकदुहितुः ।
जलान्निस्सृत्याब्जं विकसन-रमावास-सुरभीन्
विधत्ते सर्वं तत्तु भुवनमणेर्वासरमणेः ।।१०।।

न चैतच्चित्रं मय्यनधिगतशास्त्रे कथमपि
यतो वाग्देवीयं परमकरुणा भक्तपृथुके ।
समस्त-ब्रह्माण्डस्थितिनियम-लीलाऽतिललितात्
कृपालेशाद् यस्याः स्रवति तु सुधा प्रस्तरचयात् ।।११।।

जटाजूटैर्जुष्टो निगमरसतुष्टोऽतिविभवः
समर्थः सर्वत्राऽप्रतिहत-गति-र्योगविषये ।
अकर्तुं कर्तुं चान्यथयितुमपीशः खलु सदा
विशुद्धानन्दाख्यः स्फुरतु हृदि मे कोऽपि पुरुषः ।।१२।।

निजेच्छातो लोकान्तरगमन-विद्याति-निपुणः
स्वभक्तान् त्रातुं योगबलवशतः सर्वकृतिकृत् ।
जगत्सर्वं सर्वात्मकमिति च सिद्धान्तकुशलो
विशुद्धानन्दाख्यः स्फुरतु हृदि मे कोऽपि पुरुषः ।।१३।।

दुकूलं बिभ्राणः शिशुरवि-मयूखच्छविहरं
स्वसिद्धि-व्रातन्यक्कृत-निखिल-देवाधिपगणः ।
वहन् देहेऽस्मिन् नार्मद-मदनजिल्लिङ्ग-निवहान्
विशुद्धानन्दाख्यः स्फुरतु हृदि मे कोऽपि पुरुषः ।।१४।।

इहत्योऽपि स्वीयाऽप्रतिमबलसामर्थ्यवशतो
जगद्व्यापी योगी क्षितिमटति पूर्णो स भगवान् ।
तथाऽत्रत्यो दूरस्थमपि विषयं पश्यति च यो
विशुद्धानन्दाख्यः स्फुरतु हृदि मे कोऽपि पुरुषः ।।१५।।

गले रुद्राक्षाऽऽधारणमिषवशात्तांश्च सकला-
नहं मन्ये लोकानपि निजवशेऽसौ विहितवान् ।
अथो वा लोका स्पर्शन-सुकृत-लोभात्किल समे
पवित्रीकर्तुं स्वान् सपदि गलदेशं ह्युपगताः ।।१६।।

जगन्मातुः क्रोडेऽनवरतरतस्स्वीयतपसा
मुदा खेलन्यस्तत्सुविमल-कृपापात्र-मनघः ।
मुहुस्तत्पादाम्भोरुहयुगल-सेवैकहृदयो
विशुद्धानन्दाख्यः स्फुरतु हृदि मे कोऽपि सदयः ।।१७।।

न योगीशानां तच्चरितमिह वक्तुं प्रभवति
कदाचित्कश्चिद्धोः क्वचिदपि कुतश्चित्कथमपि ।
तथाप्येषा भाषा भवतु विमला निश्चयमहो
मुहुः कृत्वा लग्नो ननु वृजिनमग्नोऽपि तरसा ।।१८।।

न यद्वृत्तं वेत्तुं धिषणाधिषणा धाष्ट्र्यमकरोद्
धराधुर्यो धैर्यं धरति धुरि धिक् धर्षितधियाम् ।
यदि प्रांशुप्राप्येऽतिमधुरफले लोभवशतो
भवत्युद्बाहुर्वामन इह स हास्योऽखिलखलैः ।।१९।।

स्वयं नो यो योगी प्रभवति महायोगिचरितं
न वक्तुं वा गातुं कथमपि कदाचिज्जगति सः ।
तथाप्येतस्मिञ्जन्मनि विबुधवाण्यध्ययनकृत्-
फलप्रार्थि स्वान्तं चपलयति मां कर्तुमपि तत् ।।२०।।

कवीन्द्रस्वान्ताम्भोज-वरवरटेऽङ्गाऽखिलमहा-
मनीषीशव्राताऽमलवचनजाताऽर्चिततमे ।
अये मातर्हे भारति भवति वन्द्ये भगवति
पुनीह्यात्मानं योगिचरित-सरस्स्नान-सलिलैः ।।२१।।

जनिर्वङ्गेऽभङ्गेऽध्ययनमनु कृत्वा मनुजपं
ततो गङ्गं गत्वा वसतिरथ दीक्षा भृगुमुनेः ।
वटुर्दण्डी योगी मिहिरशशि-विज्ञानगतिवित्
ततस्तीर्थस्वामी परपरमहंसोऽभवदसौ ।।२२।।

गुरूक्तः स्वोद्वाहं सपदि कृतवान् वीतममतः
ततश्चक्रे लोकेऽत्र विविधमठस्थापन-विधिम् ।
चिकित्सां रोगाणां बहुविधशिव-स्थापनमपि
स्वभक्तानां रक्षां विबुधकुलदीक्षां विहितवान् ।।२३।।

महाश्चर्याणां लोकसदसि विधाता स्वतपसा
स्वशास्त्रोक्तं प्रत्यक्षमथ भुवनेऽदर्शयदहो ।
प्रभोराज्ञां मत्वा परमपदमाप्तं च भवता
समासेनैतत्ते चरितमिदमुक्तं नु मनुना ।।२४।।

यमीशानां वन्द्यः सुकृत-कुलकन्दः सफलवाक्
तपस्स्वाराज्येन्द्रो जितविबुधवृन्दोऽप्रतिमभः ।
क्रियाभ्यासेऽतन्द्रः कुलजलधिचन्द्रः सकलविद्
विशुद्धानन्दो न्यक्कृतनिखिल-विन्दुर्विजयते ।।२५

समुद्यत्सप्ताश्वत्विषि प्रकटयन्नैज-विभवं
सदा देहोत्थैस्तैः शुभसुरभिभिः पूरितदिशम् ।
नमत्सङ्घ्यावच्छिष्य-मधुकरसंसेवितमथो
विशुद्धानन्दाब्जं लसति तदपूर्वं किमपि कौ ।।२६।।

विधातुः संसृष्टौ निखिलभुवनानां किल मणिः
सदा धन्या मान्या भुवि विजयते भारत-मही ।
स्वयं स्वस्मिन्पूर्णोऽप्यवतरति यस्यां स भगवान्
परित्राणायेत्यादिक-विमलगीतोक्तवचनात् ।।२७।।

सदा गङ्गोत्तुङ्गोत्तमतमतरङ्गाति-ललिता
महामाहेयीसञ्चरण-चरणन्यास-महिता ।
कराम्भोज-द्वन्द्वाऽऽयतन-बदरीभूत-विभवै-
र्महायोगिव्रातैःपद-कज-रजोभिर्धवलिता ।।२८।।

असौ नाभीपङ्केरुह-वसति-लोकैकजनितु-
र्मुखाम्भोजारण्याऽऽविहरणमराली सुरगवी ।
स्वयं वासार्थं लोभपरवशचित्ताऽऽगतवती ।
विहाय स्वर्गं सा भुवि विजयते भारतमही ।।२९।।

अथैतस्यां काचिल्लसति सुगुणन्यक्कृत-दिशा
मरुत्वद्देवत्या दिनकर-कर-स्पर्शरुचिरा ।
तपश्चर्याऽऽचार्यैर्जगदपरिहार्यैश्च सततं
हरित् प्राची सेव्याऽखिलविभवभव्या बुधवरैः ।।३०।।

अथास्यां प्राच्यां सृष्टि-समयत एवातिविलसत्-
तपश्चर्या-चक्रार्जित-जितमनस्साधन-धनैः ।
महाधीराधीशैर्धरणिधरण-ध्यान-धनिकैः
सदा जुष्टा काचिल्लसति विमला वङ्गधरणिः ।।३१।।

महासङ्ख्यावत्सञ्चयविहित-वासाऽति-रुचिरा
विपश्चिद्वक्त्राम्भोरुह-वसति-वाणी-कृत-गृहा ।
महातन्त्र-ग्रन्थोक्त-विधिगत-सिद्ध्यैक-निलया
सदाऽनन्यैर्मान्या भुवि विजयतां वङ्ग-धरणिः ।।३२।।

कदा वङ्गे देशेऽर्णव-सुरणदीसङ्गम-तटे
'मुहुर्मातर्दुर्गे त्वदरुणपदाम्भोजनिकटे ।
लुठन्तं मामाश्वासय जननि बालं' किल वद-
न्नहं धन्यम्मन्यो निमिषमिव नेष्यामि दिवसान् ।।३३।।

अहो, अस्मिन् बङ्गाह्वयधरणिमध्ये महति 'व-
र्धमान'-प्रान्तोऽयं कलुषनिचयान्तो नयनहृत् ।
यतो जातो योगी किल निजगुणौघैर्जनिभुवं
यथार्थाख्यां चक्रेऽखिलभुवनचक्रे झटिति ताम् ।।३४।।

अथास्मिञ्छोभाढ्ये विमलमतिभिः पेशलैर्वर्धमाने
महीदेवक्ष्मापोरुजवृषलवर्यैः सदा वर्धमाने ।
अभूत् कश्चिद्धन्योऽतिमनुजजनिर्वण्डुलग्राम एषोऽ-
वतीर्णो यस्मिन्नग्रजवरकुलेऽसौ षडैश्वर्यशाली ।।३५।।

आस्तां 'वण्डुल'नामके सुरुचिरे ग्रामे तपस्याऽऽकरे
नाना-पुष्प-फल-प्रफुल्ल-विटपि-स्तोमच्छटाऽऽच्छादिते।
जम्बू-निम्ब-कदम्ब-चूत-विलसद्-भृङ्गालि-काली-कृते
गार्हस्थ्यं परिपाल्य तावखिलचन्द्रो राजराजेश्वरी ।।३६।।

सदाचारी पुण्यार्जित-सकललोकोऽवितथवाक्
स्वकालेष्वभ्यस्तत्रिसमयकसन्ध्या-विधिरसौ।
व्रतव्रात-स्वान्तो निरतिशयदान्तो विमलधीः
कुलाचार-प्रष्ठोऽभवदखिलचन्द्रोऽत्र जगति ।।३७।।

गुणाम्भोधिः श्रीमानतिथिचयसेवी च शास्त्रप्रवीणः
स चट्टोपाध्यायोऽभवदखिलचन्द्रः स्वधर्मैकनिष्ठः।
अथाऽभूदादित्य-प्रतिनिधि-पति-प्राणलग्न-स्वचित्ता
दयाऽऽरामा रामागणकुलमणी राजराजेश्वरी सा ।।३८।।

तयोः सद्गार्हस्थ्यं सुपरिचरतोर्धर्मिणोर्भाग्यतः सोऽ-
भवज्ज्येष्ठः पुत्रो जगति कृतिनाथो हि यो भूतनाथः।
महाभाग्यं मन्तव्यमिह सकलैस्तस्य तेन स्वपुण्यै-
र्यतः सिद्ध्यब्धेर्योगिकजतरणेरग्रजत्वं प्रलब्धम् ।।३९।।

अथ द्वाषष्टि-द्वादश-शततमाश्रीलशरदि
वसन्तः सर्वेषामपि ॠतुचयानां नरपतिः।
समायातः कालक्रमपरवशो मानसहरोऽ-
प्यपूर्वश्रेयश्श्रेणिरवसदहो वण्डुलभुवि।।४०।।

चुकूजुः कुञ्जस्थाः सुकलितकलाः कोकिलकला
मदोन्मत्ता रक्ताक्षिकमल-युगाः पञ्चमरवम्।
अभूत्तत्काकल्या स्फुटितसमकल्या प्रतिदिशं
जगत्कल्याणस्यावतरणविधेः सूचनमहो ।।४१।।

अयं बालः स्वीया–प्रतिमतपसा जन्मनि पुरा
गुरून् स्वान् सेवित्वा सकलमपि जित्वेन्द्रियगणम् ।
तथा ज्ञात्वा विज्ञानमथ च रहस्यं श्रुतिगतं
स्वकीयामाख्यां तां सफलयति तातस्य वचनात् ।।४२।।

ततश्चक्रे बाल्यामतिमधुरलीलां शिशुरयं
स्वमातापित्रोर्यो हृदयकुमुदं तत्प्रतिकलम् ।
मुखेन्दुज्योत्स्नाभिः समुदमथ कुर्वन्नहरहः
सदैवं रेमेऽसौ समयगतिरेषाऽतिविकटा ।।४३।।

सकलभुवनलक्ष्मीलेखया वर्धमानः
स जयति भुवि भूयः साम्प्रतं वर्धमानः ।
अथ च तदनु रम्यग्रामलक्ष्मीसमाढ्या
लसति जगति नूनं वण्डुलग्रामलक्ष्मीः ।।४४।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारहीरप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषश्रयः।
एष श्रीमनुदेवशाब्दिककविस्तस्य प्रबन्धे पुनः
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽयमादिर्गतः।।४५।।

*।।इति श्रीवीणापाणिदेवीपशुपतिनाथभट्टाचार्यसुत-*
*मनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये*
*जन्मवर्णनात्मकः प्रथमः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## द्वितीयः सर्गः

इत्थं पुराण-पुरुषो ह्यवतीर्य लोकं
चित्रा मुदा विहितवान् विविधाः स लीलाः ।
आब्रह्मलोक-निज-शक्ति-वशीकृतानां
या योगिनामपि मनः प्रसभं हरन्ति ।।१।।

मेने स काल-पदवीं तु निच्छया यत्
तस्यानुसारमथ ताश्च चकार लीलाः ।
मन्तव्यमेव विबुधैः सुमहत्तु भाग्यं
तस्यैव काल-पुरुषस्य यतिः समर्थः ।।२।।

एतेन चेद्गतधियो यदि ते वदन्ति
सामर्थ्यमेव न यतः स ततश्चिखेल ।
नैवं विधातृ-पदवीमनुसृत्य लोके
गच्छन्ति तत्तु यमिनां प्रमुखं यमित्वम् ।।३।।

वैज्ञानिकेन्द्र-शतपत्र-सहस्ररश्मेः
सम्पूर्णविश्व-जननस्थिति-नाशचुञ्चोः ।
तास्ता जयन्त्यतिधियोऽधिरसं विशुद्धा-
नन्दस्य तत्परमहंसवरस्य लीलाः ।।४।।

सोऽयं शिशुर्धवल-पक्षशशीव सद्यो
वृद्धिं जगाम शनकैः समयानुसारम् ।
वृद्धिं यथा व्रजति शीतकरोऽन्तरीक्षे
बालस्तथैव भुवि केवलमङ्कशून्यः ।।५।।

येन क्रमेण पृथुको ववृधे स भूयः
सत्पात्र-दत्तमतिरेव सदा धरायाम् ।
तेन क्रमेण ववृधेऽथ तदीय-पित्रोः
अन्योन्यमेलनभवा कृतकृत्यता सा ।।६।।

दृष्ट्वा तथाद्भुततमं किल बालमेनं
धात्रा सुपुण्य-निचयैरिव निर्मितं तु ।
पित्रोः पुनः किल तयोर्बहु-पुण्यभाजोः
शान्तिः पराऽभवदहो वचसामगम्या ।।७।।

श्रीमन्मुखाब्जकर-दीधिति-शोभिताक्कः
शश्वद्विभूति-विभवान्वित-सर्वकालः ।
रेजे शिशुः शिव इवाप्रतिमो धरायां
यः केवलं त्वभिधया नहि, कर्मणाऽपि ।।८।।

नैज-प्रभाव-परिपूत-समस्तलोका
ब्रह्माण्ड-मण्डलगताऽखिल-शन्निदानम् ।
तद्देहकान्तिरमला व्यकसत्तदीय-
गेहस्य गोपुर-सभान्तर-निष्कुटादौ ।।९।।

एवं क्रमेण भसिताऽऽवृतवह्निरेष
पित्रोर्हृदम्बुजयुगं प्रविकासयन्त्सः ।
स्वभ्रातृबन्धु-भगिनी-गृहसेवकानां
चित्तानि तानि रुचिरो रमयाञ्चकार ।।१०।।

मात्रा क्वचित्क्वचिदपि प्रययौ, भगिन्या
साकारितस्त्वरितमेव पपात कुत्र ।
मन्दं जहास, च रुरोद, शिशुः कदाचिद्
शक्तोऽपि कालगतिमत्र मुदा स मेने ।।११।।

सर्वे जना गृहगताः पृथुकेऽत्र भोला-
नाथे गृहस्थजनताहृदयैकनाथे।
स्नेहाधिकं महदनन्यजनप्रलभ्यं
चक्रुः सदा किल निजेष्टबुधे यथैव।। १२।।

आबाल्यतोऽभवदथो सततं तु भोला-
नाथस्य पूर्व-जननार्जितपुण्यराशेः।
कुत्रापि गूढविषये स्थिरता सदैवाऽ-
साधारणी ननु तदीय-जनैश्च बुद्धा ।।१३।।

चारित्रिकं बलमथापि दृढप्रतिज्ञाऽ-
क्लान्तिः परिश्रमचयोऽध्यवसाय एव ।
सा निर्भया प्रकृतिरत्र समे गुणौघा
वासेच्छयैव तु तदीयतनौ त ऊषुः ।।१४।।

सङ्ख्यावदब्ज-मिहिराखिल-चन्द्रचट्टो-
पाध्याय-मन्दिरतले विविधास्तथाऽऽसन् ।
वंशक्रमानुगत-निर्जर-मूर्तयस्ताः
पूजैव खेलनमभूत्तु शिशोः समासाम् ।।१५।।

रेजुस्तदीय-भवने मनसा भवानी
सिद्धेश्वरी च कमलाऽपि च बालकृष्णः।
श्रीश्यामसुन्दरतनुः परमा च लक्ष्मी-
नारायणावपि प्रतिष्ठितशङ्करश्च ।।१६।।

आसां समर्चनविधिर्ननु देवताना-
मास्तिक्यचुञ्चु-मुखजन्म-कुलोचितानाम्।
ब्रह्मण्य-संस्कृत-हृदः पृथुकस्य भोला-
नाथस्य तस्य हि बभूव सदैव खेला ।।१७।।

एतेन भूमसुकृतौ पितरौ तदीया-
वेतादृशार्भकजनी भुवि धन्यधन्यौ।
कार्ये यतो लगति हृद् महतां कथञ्चित्
कृच्छ्रेण, तत्र च शिशोः सततं प्रवृत्तिः ।।१८।।

क्रीडामिषेण बहुवारमसौ चकार
पूजां पुनर्निजगृहस्थित-देवतानाम्।
ब्रह्माण्डतत्त्व-परिशीलन-मानसानां
क्रीडाऽपि सा भवति काचिदलौकिकीह ।।१९।।

आहृत्य पुष्पनिचयान् वनतः स्वहस्तैः
संघृष्य चन्दनमथो ग्रथितं च माल्यम्।
पूजाविधिं सकलमत्र विधाय तूर्णं
चिक्रीड स त्वखिलचन्द्रसुतोऽतिशुद्धः ।।२०।।

कुत्राप्यथैष तुलसीदल-मञ्जरीश्च
शम्भुत्रिनेत्रसम-कोमल-बिल्व-पत्रम्।
पङ्केरुहाणि च सरोवरतो गृहीत्वा
चेखेल्यते स्म शिव-पूजनमेव बालः ।।२१।।

एतस्य मन्त्ररहितस्य शिशोः सपर्या
व्यर्था भविष्यति परत्र न वाच्यमेवम्।
मन्त्रादिभिर्विरहिताऽपि च भक्तिपूर्णा
शुद्धस्वचित्त-विहिता सफलोभयत्र ।।२२।।

विद्वान् वदत्यथ नमोऽस्तु च 'विष्णवे'ऽस्मै
'विष्णाय' वै नम इति प्रजगाद मूर्खः ।
पुण्यं भवत्यपि समं ह्युभयोः प्रवक्त्रोः
श्रीमज्जनार्दनप्रभुः किल भाववेत्ता ।।२३।।

आश्चर्यमेतदखिलैरपि दृष्टमस्मिन्
बाले समस्त-शुभ-कर्मज-पुण्यसिन्धौ।
नायं कदाचिदपि यो ह्यवशिष्य पूजां
भ्रान्तोऽपिबज्जलमपि प्रथमं कुतश्चित् ।।२४।।

एवं कदाचिदपि बालक एष एव
क्रीडाप्रसङ्ग-वशतः प्रययौ विदूरम्।
ग्रामाच्चिखेल खलु तैश्च निजानुरूपैः
स्वीयैरभिन्नहृदयैः सखिभिः सहैव ।।२५।।

निर्माय तत्र सिकतामयलिङ्गमूर्तिं
क्रीडामिषेण हृदयेन शिवं पुपूज।
पश्चाद् यदाऽभवदयं ननु मग्न-चित्तो
ज्ञानं न बाह्यजगतो ह्यभवत्तदानीम् ।।२६।।

जन्मान्तरेषु विहिताखिल-शुद्धयश्च
सत्साधना-विहित-दिव्य-शरीर-भाजः।
वन्द्याः सदैव भुवि तादृशभाग्यवन्तो
ये भक्तिमन्तममलं तनयं लभन्ते ।।२७।।

तत्रैव कश्चिदथ बालकदुष्टचित्तः
पूजासु विघ्नमकरोद् हृदयेप्सितासु।
पूर्णाऽभवत्तु फलतो नहि तस्य पूजा
ध्यानोत्थितः सपदि सर्वमसौ बुबोध ।।२८।।

यद्यप्यसौ जननकालत एव भोला-
नाथः पराजित-समस्त-मदादि-शत्रुः।
दृष्ट्वा तथापि च तदीय-कुकृत्यमेतद्
चापल्यतः शिशुगतात्स उवाच वाचम् ।।२९।।

'हंहो, त्वयात्र मम शङ्कर-पूजनेऽस्मिन्
विघ्नो महान् सपदि चाचरितो जघन्यः।
निश्चप्रचं मम भविष्यति शङ्करस्य
सर्पेण तेन तव दंशनमित्यवेहि' ।।३०।।

शापस्तु नैष इति यद्यपि सत्यमेतद्
बालस्वभाव-वशतो गदितं सहासम् ।
आश्चर्यमद्भुतमदः परिहास-वाक्यं
सत्यं बभूव, वितथं नहि बालकस्य ।।३१।।

तस्मिन्दिने शिशुममुं भुजगश्चखर्दा-
प्याश्चर्यमन्यदभवच्च तदैव तत्र।
स्पृष्टस्तदीय-करकञ्जयुगेन सद्यो
मृत्युं गतोऽपि स शिशुः पुनरुत्थितोऽभूत् ।।३२।।

अभूत्तस्माद् ग्रामात् सुरुचिरतमाद् वण्डुलादुत्तरस्यां
तदा किञ्चिद्व्राण्डारडिंहिरपदं हन्त चारात्ततस्तु ।
श्मशानक्षेत्रं तद्वटतरुतले निर्जने निर्भयोऽसौ
मुदा भोलानाथोऽवसदथ मनस्तत्र रेमे तदीयम् ।।३३।।

स्थानं तदा यदभवत् पृथुकस्य भोला-
नाथस्य तत्प्रियतमं विजनप्रियस्य।
एवं क्रमेण निज-जीवन-साधनेष्टं
स्थानं चिकाय स तु शैशव-काल एव ।।३४।।

लब्ध्वा कथञ्चिदपि यो गृहतोऽवकाशं
बालोऽप्यबालचरितोऽनुदिनं जगाम।
स्वस्येप्सितं मनुज-हीन-मदः श्मशानं
शीघ्रं तदेव निजसिद्धि-निदान-भूतम् ।।३५।।

ग्रामे समीप इह कुत्रचिदागतश्चेत्
साधुः कुतश्चिदपि बालक एष बुद्ध्वा।
तद्दर्शनार्थमति-कातरचित्त एव
दृष्ट्वा कथञ्चिदपि तत्परतस्तुतोष ।।३६।।

एवंविधेष्ववसरेषु हि बालभोला-
नाथं कथञ्चिदपि वारयितुं समर्थाः।
नो ते बभूवुरखिला अपि ये मिलित्वा
भ्राता पिता च जननी भगिनी कुतोऽन्यः ?।।३७।।

साधोः कदाचिदपि दर्शनतो निषिद्ध-
श्चेत्तत्र गन्तुमसमर्थ इति प्रकल्प्य।
नक्तं ययौ स निभृतं शिशुरेक एव
नो निश्चयं कृतवतां हि किमप्यसाध्यम् ।।३८।।

तत्रैकदा निजगृहे स हि भर्त्सितोऽभूद्
निर्दोष एव च ततो हृदयेऽभिमानः।
तस्याति-निर्मल-तमे सहसोदियाय
नो मानुषेष्वपि तु तद्गृहदेवतासु ।।३९।।

जानाति यः शिशुरसौ खलु बाल्यतो हि
मर्त्या भवन्ति भुवनेऽत्र निमित्तमात्राः।
भूतं च यद् भवति यच्च भविष्यतीह
लीलायितं सकलमेव दिवौकसां च ।।४०।।

श्रीश्यामसुन्दरतनुं स्वगृहात्स नीत्वा
धृत्वा तदीप्सिततमे निजवक्षसीह ।
आत्मानमेव तरसा विनिहन्तुकामः
मग्नः स पुष्कलसुपुष्करपुष्करिण्याम् ।।४१।।

तत्राऽभवत्सुमहदेतदहो विचित्रं
गम्भीर-नीरमथ तन्ननु जानुदघ्नम्।
यत्रैव स व्रजति तत्र जलं च तादृङ्
न प्राभवत्किल चिरायुरथो स मर्तुम्।।४२।।

सम्पूर्णशास्त्र-निचयोदित-चन्द्र-सूर्य-
विज्ञान-तत्त्व-परिरक्षण-कार्य-सिद्ध्यै।
आसीद् भवेऽभिलषितः प्रयतोऽवतारो
यस्यात्र, तस्य मरणं भवतु ह्यकाले ? ।।४३।।

दृष्ट्वैव तत्र किल बालक-चेष्टितानि
उच्चैः पुनर्भगवती प्रकृतिर्जहास।
ब्रह्माण्ड-मण्डलजनि-स्थिति-नाशचुञ्चो-
र्मोहाय नूनमधियां यमिनस्तदेतत्।।४४।।

पूर्णोऽपि योऽत्र भगवान्ननु कृष्णचन्द्रो
गाश्चारयन्त्स नवनीतमचूचुरच्च।
युद्धात्पलायनमपि क्वचिदेव युद्धं
चक्रे हि यत्तु कुधियामिह मोहनार्थम्।।४५।।

काले गते खलु तदीयगृहस्य सर्वे-
प्यन्वेषणे परवशास्सुरविग्रहस्य।
दृष्ट्वा च मूर्तिसहितं पृथुकं गृहस्थाः
सन्तोष्य तौ द्रुतमथापि तदाऽऽनयंस्ते।।४६।।

ग्रामे च तत्र रुचिरेऽखिल-चन्द्र-चट्टो-
पाध्यायगेह-निकटे स उवास कश्चित्।
शुद्ध-स्वभावमति-वङ्किम-कुण्डुनामा
पुत्रेण तस्य विमला भवति स्म मैत्री।।४७।।

आसीत् कदाचिदपि तस्य सुहृत्स एषोऽ-
प्यत्यन्त-पीडित-तनुर्निज-कर्मतो यः।
कृत्यं यतो न तदभुक्तमिह क्षिणोती-
त्यासन्न-मृत्युमिव तं च ददर्श नाथः ।।४८।।

श्रीश्यामसुन्दर-वगाहन-वारि दत्वा
वक्त्रेऽलिके स्ववयसं ह्युदजीवयत्सः।
यः प्रार्थितः सपदि चात्मजरक्षणाय
शीघ्रं तदीयपितृ-वङ्किम-कुण्डुना हि ।।४९।।

जाते तु शम्भु-मुखमास-वयस्क-भोला-
नाथे तदीय-जनकः सहसैव हन्त।
उत्सृज्य तूर्णमथ मोहमयं प्रपञ्चं
साकारितो मघवतेव दिवं सिषेध ।।५०।।

तस्मात्प्रभृत्यथ महादरतो हि भोला-
नाथं स्म पालयति तस्य सदा पितृव्यः।
योऽसौ गुणेन बुधकैरव-चन्द्रनाथो
नाम्ना तथाऽभवदहो स हि चन्द्रनाथः ।।५१।।

यो लालयन्नपि निजप्रियपात्र-भोला-
नाथं गुणाढ्य-हृदयः सुतनिर्विशेषम्।
तस्मै ददौ स किल नूत्नपटं कदाचिद्
चक्रेऽतिचञ्चलमनाः स च खण्डशस्तत् ।।५२।।

दृष्ट्वा च तज्झगिति कोपपरीत-चेता
अत्यन्तमेव कृतवान्त्स च भर्त्सनं हि।
बालोऽप्यसौ तदनु दुःखितचित्त एष
आकुञ्च्य कञ्जसदृशे स्वकरे चकार ।।५३।।

अत्यद्भुतं सुमहदेतदभूत्तदानीं
दृष्टं च बालचरितं सकलैर्गृहस्थैः।
सोऽयं यदा स्वकर-कञ्ज-पुटं मुमोच
निश्छिन्नमेतदभवद्वसनं समस्तम् ।।५४।।

दृष्ट्वा गृहस्थित-जनाः खलु तावकीना
एतद्विचित्रतममद्भुत-कार्य-जातम् ।
'देवांशतो जनिरभूद्भुवि बालकस्य'
निश्चप्रचं झगिति निश्चितवन्त एते ।।५५।।

कदाचित्तत्क्रीत्वा परमरमणीयं पदाब्जानुकूलं
मुदा भोलानाथाय च निजहृदेऽसौ ददौ खुल्लतातः ।
उपानद्द्वन्द्वं तत्किल सपदि दत्तं स्वमित्राय तेन
सुतायास्मै स्वान्ताय ननु शशिनः कर्मकारस्य तस्मै ।।५६।।

उद्वाह-कर्मणि शुभे सुहृदे न दत्त्वा
स्थातुं तदा नहि शिशुः सुमना अशक्ष्यत् ।
तस्मै च दत्तमिदमित्यवगत्य भूयः
सद्यश्चुकोप शिशवे खलु खुल्लतातः ।।५७।।

यस्तातमातृ-भगिनीषु महादरोऽपि
तद्दत्तवस्तुनिचयं सुहृदे ददाति ।
विस्मृत्य सर्वमथ नैजगृहं गुरूंश्च
मित्रत्वमीदृगमलं भुवि धन्यमेव ।।५८।।

बालः पुनः पुनरपीह तिरस्कृतोऽभू-
दत्यन्तखिन्न-हृदयः स तदा बभूव ।
आदाय रूप्यकचयं परिचारिकातोऽ-
प्यारुह्य सोऽगमदितः परिचारकाश्वम् ।।५९।।

गत्वा ततस्तु पृथुकः किल वर्धमानं
सानीय चात्र च तदौषध-गोलिकास्तु ।
विक्रीय ताश्च निजसम्वशथे च भोला-
नाथो ह्युपार्जयदहो द्विगुणं धनं तु ।।६०।।

संशोध्य रूप्यकचयै-र्द्विगुणैस्तदानीं
स्वोद्धारमेष मतिमान् परिचारिकायाः ।
शिष्टैश्च रूप्यकचयैर्विविधाश्च पादूः
क्रीत्वा ददौ स किल सर्वजनेभ्य एभ्यः ।।६१।।

बाल्ये मुधैव किल चेष्टितवान् पितृव्यः
साङ्ग्ल-प्रशिक्षणविधौ बहुवारमेव ।
व्यर्थो बभूव च तदा सुमहान् प्रयासो
यो नैकदा पठितवानपि चाङ्ग्लभाषाम् ।।६२।।

बाल्यात्प्रभृत्यथ महाधिषणस्य भोला-
नाथस्य तस्य रुचिरा रुचिरारराज ।
नैसर्गिकी सुभगसंस्कृतवाङ्मयेऽस्मिन्
हंहो सुपर्वभणिते तव भाग्यमेतत् !!६३।।

यो भारतीय-निगमागम-सञ्चयेषु
विन्यस्तरत्ननिचयान् पुरतः समेषाम् ।
सोऽनेकधा जगति दर्शितवान्तु तस्य
ब्राह्म्यां रुचिर्यदि भवेत्किमु तत्र चित्रम् ?।।६४।।

नक्षत्र-सूर्य-शशि-वायु-जलादिकानां
विज्ञान-वैभवचयः स हि भारतीये ।
यो यो विभात्यखिल-निर्जरवाङ्मयेऽस्मिन्
नो स क्वचिद्भवति निश्चितमेतदेव ।।६५।।

आजन्म-संस्कृततरतैर्महितं नवद्वी-
पं पण्डितेश्वर-चयैर्धरणौ विभाति।
तत्रत्य-कीर्तिधर-पण्डितरत्न-विद्या-
रत्नादभूत्सपदि संस्कृत-पाठनं तत् ।।६६।।

समन्तात्संस्कार-प्रयतमनसां संयतधियां
सदा षट्शास्त्राम्भोनिधिनिचयचिन्ताचयकृताम् ।
सतां व्यूहैः पूर्णञ्च हृदयमणिर्वङ्गधरणे-
र्नवद्वीपं भूयो भुवि विजयते तैर्निजगुणैः ।।६७।।

एवं शिशुः सपदि बुद्धसमस्तशास्त्रो
रेजे द्विजोचित-समाचरण-प्रवीणः ।
ज्ञात्वा च शास्त्र-निचयं निजमातृभक्तिः
सा पूर्वतोऽप्यभवदेव गरीयसीह ।।६८।।

यद्यप्यसौ जनन-कालत एव पूर्णो
नो तत्कृते किमपि शिक्षणमस्ति शिष्टम् ।
एवं तथापि गुरुगौरव-वर्धनाय
गत्वा गुरोश्चरणमूलमसौ पपाठ ।।६९।।

विश्वामित्रगृहे पपाठ स पुरा श्रीरामचन्द्रो यथा
श्रीसान्दीपनिगेह एव च पपाठ श्रीयशोदात्मजः।
एवं सोऽपि गुरुं समेत्य सततं सर्वाणि शास्त्राण्यलं
सद्यस्तामनुसृत्य लोकसरणीं भूयः पपाठादरात्।।७०।।

पद्मप्रकाशैर्मिहिरस्य किं स्यात्?
पद्मस्वरूपस्य विकाश एव।
साक्षात्कृताम्नायविधेस्तु तस्य
पाठेन शास्त्रैस्सफलत्वमाप्तम्।।७१।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारहीरप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषश्रयः।
एष श्रीमनुदेवशाब्दिककविस्तस्य प्रबन्धेऽधुना
सर्गश्चारुविशुद्धवैभवमहाकाव्ये द्वितीयो गतः।।७२।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुत-*
*मनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे*
*महाकाव्ये द्वितीयः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## तृतीयः सर्गः

एवं बालोऽनुदिनमपठत्पूज्यपादाद्गुरोश्च
विद्यारत्नाद् निखिल-निगमाम्भोनिधेः सार्थकाख्यात् ।
वेदान्तं व्याकरणमथ च काव्यं समं धर्मशास्त्रं
स्वीयाम्नायं तदुपनिषदं तत्पुराणादिकञ्च ।।१।।

भोलानाथेन सपदि कृते शास्त्रपाठे तदैव
तेषां तेषामपि च सकलानां हि शास्त्रव्रजानाम् ।
लेखः साफल्यमभजदहो लेखकानामृषीणां
तत्तत्त्वार्थं सकलपुरतोऽदर्शयद् यस्तपोभिः ।।२।।

शास्त्रं किञ्चित्कथमपि जनास्ते पठित्वा सभायां
व्यर्थं वादाहव-हवनकुण्डे तु दन्दह्यमानाः ।
धन्यो यः शास्त्रजलधिगतं तत्त्वपीयूषयूषं
धुर्यादत्ते सफलमभवच्छास्त्रपाठस्तु तस्य ।।३।।

भोलानाथः श्रुतजलनिधेः राजहंसो यथाऽसौ
हित्वा हेयं झटिति जगृहे सारसारातिसारम् ।
ज्ञात्वा पूर्वं निजगुरुगृहे तत्परं स्वक्रियाभिः
प्रत्यक्षं यो भुवन-भवनेऽदर्शयद् दृष्टतत्त्वः ।।४।।

यः शास्त्राणां जगति कुरुते केवलं पाठमात्रं
नो तत्त्वं तद्धृदयनिहितं तच्छ्रमो निष्फलः स्यात् ।
उक्तं विज्ञैः किमपि कुरुते पुस्तकस्था न विद्या
काष्ठं शुष्कं तु सदननले न ज्वलेत्कर्हिचित्तत् ।।५।।

संसारेऽस्मिन् प्रतिदिनमहो किं न सूते सदाहो
योषित्सङ्घः तनुजनिकरं तं तदुच्चार एव ।
पृथ्व्यां धन्याऽस्य किल जननी राजराजेश्वरी सा
पुत्रो यस्याः श्रुतिचयरहस्यस्य वेत्ताऽर्थतोऽभूत् ।।६।।

शास्त्रं ज्ञात्वा स इह निखिलं पूर्वतो यः सदाऽऽसीद्
मायामुक्तोऽभवदथ ततस्तत्र सर्वातिशायी ।
गङ्गात्स्वर्णं भवति सहजद्योतदीप्तं तथापि
संस्कारैः संस्कृतमथ भवेत्पूर्वतो भाऽधिकैव ।।७।।

अस्मात्पश्चाद्विकट-समये नो जहौ स स्वधैर्यं
नो वश्यं कर्त्तुमपि च विपत्प्राभवत्तं कदाचित् ।
रेजे शास्त्राध्ययन-समयादेष सिद्धोऽपि पूर्वं
कासारे तत्र वसति यथा पद्मपत्रं तथैव ।।८।।

भोलानाथोऽभवदथ यदाऽष्टाब्दकोऽसौ तदीयः
चट्टोपाध्यायकुलतरणिश्चन्द्रनाथः पितृव्यः ।
मृत्योः पश्चात्स्वपितुरिह योऽपालयच्चादरेण
प्रेम्णा स्नेहेन जनकसमो यः स आसीद्विपश्चित् ।।९।।

सोऽयं हित्वाऽगमदित इमं मृत्युलोकं सुदुःखं
सद्यो हा हा, जगति सहसा ज्ञाति-बन्धून्विहाय ।
अस्मिँल्लोके क उत चिररात्राय कर्माऽत्र भुक्त्वा
मृत्युद्वारं व्रजति नहि भो जीवभावैकलभ्यम् ।।१०।।

अन्ये सर्वे मरणसरणौ बान्धवास्ते तदीयाः
शोकाम्भोधौ तदनु विनिमग्नाश्च मायान्विता ये ।
वारं वारं रुरुदुरथ सम्भूत-मिथ्याभिमाना
दृष्ट्वा को वा निजजनवियोगं न देही व्यथेत ? ।।११।।

अत्याश्चर्यं सुमहदभवत्तत्तदाऽदृष्टपूर्वं
भोलानाथः शिशुरपि यदाऽष्टाब्दको यस्तदानीम् ।
शोकव्यग्राः सकल-मनुजा यत्र कालेऽतिदुःखे
नौ तत्रासौ कथमपि रुरोदैतदेवातिचित्रम् ।।१२।।

आ तद्बाल्यात्तदुपरि प्रभावो बभूवावनौ नो
मायायाः कश्चिदपि च कदाचित्कथञ्चित्कुतश्चित् ।
मायाराज्यं सुविपुलमिदं यस्त्वतिक्रम्य नैजे
जन्मन्येवाऽरमत किल तस्मिन् कथं तत्प्रभावः ? ।।१३।।

आयातेऽस्मिन्वयसि नवमेऽभूच्च संस्कार एव
मौञ्जीबन्धः परमरमणीयस्तया शास्त्रदृष्ट्या ।
तस्मादारभ्य शुभ-दिवसाद् वर्धितं तस्य तेजः
सद्-ब्राह्मण्योचित-जपजनुर्जन्मसाफल्यभूतम् ।।१४।।

सावित्री पूजित-पदयुगा साऽभवत्सुप्रसन्ना
भोलानाथेऽतिविपुलतपस्याचयाम्भोनिधौ हि ।
देव्यास्तस्याः सपदि ववृधे सत्प्रभावात्तदीयं
ब्रह्मण्यं तच्च शतगुणितं ब्रह्मचर्यं च तादृक् ।।१५।।

तत्राश्चर्यं सुमहदभवत्तत्तु तस्यैव युक्तं
स्वग्रामस्थस्य शशिधरलिङ्गस्य मध्ये ददर्श ।
भोलानाथो गिरिशगिरिजायुग्ममूर्तिं स्वभाग्यैः
दृष्ट्वैवं चैतदभवदथो जन्म तस्यैव धन्यम् ।।१६

मौञ्जीबन्धात्परमथ च तन्मध्य एव स्वतस्तद्
भिन्नं जातं किल शिरिशलिङ्गं पुरस्तस्य सद्यः ।
एषोऽपश्यद्वर-युगलमूर्तिं शिवस्याम्बिकाया
अन्यासां दर्शनमकृत पश्चात्स मूर्तीर्बुधानाम् ।।१७।।

इत्थं दृष्ट्वा विविध-विध-बुधानां स मूर्तीः स्वपुण्यै-
रात्मानं योऽपि हि निरभिमानः स मेनेऽतिधन्यम् ।
जाता बाल्यात्प्रभृति विविधा यस्य लीला विचित्रा
दिङ्मात्रं व्याहृतमिह मया ज्ञातमेतत्कथञ्चित् ।।१८।।

अस्मात्पश्चाच्च निज-जननीं राजराजेश्वरीं तां
मृत्योर्हस्तात्सह स हि सुरैरत्र युद्ध्वा ररक्ष ।
योगीशानां यमनियमिनामस्त्यशक्यं किमाहो
ब्रह्माण्डेऽस्मिन् वयसि कतमस्मिंश्च सामर्थ्यसत्त्वात् ।।१९।।

जातं वृत्तं सपदि परमाश्चर्यभूतं जगत्सु
तच्छ्रोतव्यं श्रवणयुगलैश्श्रोतृभिः श्रोत्रपेयम् ।
श्रावं श्रावं चरितममलं नोद्विजेत प्रफुल्लं
स्वान्तं यस्यापि तु भवति सैषोऽधिकारी मतो मे ।।२०।।

बाल्ये तस्य कदाचिदेव जननी श्रीराजराजेश्वरी
पातिव्रत्यतपःप्रभाव-हसित-ब्रह्माण्ड-भाण्डेश्वरी ।
आक्रान्ता तु बभूव कर्म-वशतो रोगेण सा केनचिद्
चिन्तामग्न-मतिर्बभूव खलु भोलानाथ एषोऽचिरात् ।।२१।।

स्वीय-ग्राम-समीपवर्तिभिषजः सर्वेऽपि सम्मानिता-
श्चक्रुस्ते ननु रोगवारणविधौ स्वीयोद्यमं सर्वतः ।
जातं नैव यदा तु रोगशमनं हा प्रत्यहं चेष्टितै-
स्तस्या जीवनमेव संशयगतं शीघ्रं बभूवात्र तत् ।।२२।।

गच्छत्स्वेव दिनेषु तेषु शनकैः श्रीराजराजेश्वरी
रोगात्यन्ततनुर्बभूव नितरां माता तदीया मता ।
नो तज्जीवन-रक्षणस्य च यदा साऽऽशाऽपि शिष्टा नहि
पप्रच्छुः सकला जनाः झटिति भोलानाथमेनं तदा ।।२३।।

गाढस्नेहवशाद् वदत्यथ सती पितृव्यपत्नी मुदा
नाथं स्वीयसुतोपमं प्रियतमं 'ख्यापा खुड़ो' याऽऽदराद् ।
नाम्नाऽऽहूय च तेन तं किमवदत् त्वं ब्रूहि जीविष्यति?
नो वाऽऽकर्ण्य वचो जगाद किल योऽवश्यं हि जीविष्यति ।।२४।।

बाल्ये चातिशिशुर्बभूव पितृहीनः पञ्चमासो यदा
तत्पश्चाज्जननी सुलालितवती वात्सल्यवारांनिधिः ।
आतो बालक एष नातिसरलो विश्वासमेवाऽकरोत्
पूज्या मे जननी विहाय भुवि मां कुत्रापि सा यास्यति ।।२५।।

स्वप्ने जागरणे तथा च शयने वा भोजने खेलने
स्वाध्यायेऽध्ययने क्वचिद्विहरणे भूयश्च देवार्चने ।
दुःखे चापि सुखे विनोद-समये हासे विकासे तथा
जागर्ति स्म सदैव मातृ-परता बालस्य हृत्पङ्कजे ।।२६।।

भूयः स्वार्चित-देवतोपरि तदा भारं हृदा न्यस्तवान्
नेत्राभ्यां सुविडम्बिते ससलिलाऽम्भोजे विमुग्धे शिशोः ।
वक्षश्चापि ततो गलज्जल-कणैः क्लिन्नं बभूवाचिरात्
सम्पूर्णं किल विग्रहो ननु तदा कम्पायमानो ह्यभूत् ।।२७।।

आसीत्तन्निकटे गृहस्य किल गोशालाऽथ तत्रैव यो
गत्वा तन्निभृतं पदं क्वचिदसावुक्त्वा न किञ्चिज्जनान् ।
मञ्चस्योपरि तत्करीष-निकरे चादाय तां शर्वला-
मेकाकी च तदा प्रभूत-तिमिरे तस्थौ जनाऽलक्षितः ।।२८।।

चित्ते तस्य तदोदियाय सहसा विश्वास एवेदृशो
भूयः पूजितदेवता न कृतवत्यो मातरं जीविताम् ।
सद्यस्तर्हि तनूरभङ्क्ष्यमखिलाः कृत्वेदृशं निश्चयं
तूष्णीं तत्र गतं च चञ्चल-हृदो नो दृष्टवन्तो जनाः ।।२९।।

एवं तस्य सुनिश्चयं दृढतमं मात्रेकभक्तस्य तं
दृष्ट्वा पूर्णकृपामहाऽमृत-निधिर्देवः प्रसन्नोऽभवत् ।
उत्तीर्णा जननी च तस्य गदतः स्वस्था सती मङ्क्षु सा
नूनं बालकमक्ति-वैभवपरिज्ञानार्थमासीदिदम् ।।३०।।

सन्ध्यायां जननी तथा गृहगताः सर्वे जनास्ते तदा
जग्मुः सत्त्वरमेव तत्प्रतिदिशं येऽन्वेष्टुकामाः शिशुम् ।
दृष्टा नापि च शर्वला तदनु सा लब्धा सुरभ्यालये
यत्राऽऽसीत्किल बालकः स तु चिरं ध्यानाभिभूतस्तदा ।।३१।।

तत्पश्चान्मशकापसारण-कृते जाता यदा तद्गृहे
धूमावश्यकता तदा खलु करीषन्नेतुकामः सकृत् ।
आदिष्टः प्रययौ यदा सपदि गोपालः स धेन्वालयं
गत्वाऽपश्यदसौ शिशुं चिरगतं ध्यानाक्तचित्तं स्थितम् ।।३२।।

दृष्ट्वा तत्र तमानयच्च भवनस्य प्राङ्गणस्याग्रतः
ज्ञात्वा सोऽपि निजां प्रसूं गतरुजं दृष्ट्वाऽऽत्मजं तं च सा ।
आनन्दाम्बुनिधिस्तदीय-भवने स्वल्पेऽपि पूर्णोऽविशत्
सावित्रीव यमात्पतिं स धृतिमान्स्वां मातरं चानयत् ।।३३।।

माता तस्य यदा बभूव च मृतप्राया तदा साऽवदत्
श्रीदेवायतने भुवि क्वचिददो रिक्थं मया रक्षितम् ।
भोलानाथवटोस्ततः परमहो ज्ञात्वाऽपि सर्वं धनं
हृत्कोणेऽपि तदोदियाय नहि कश्चिल्लोभलेशोऽल्पकः ।।३४।।

जातोऽयञ्च यदा त्रयोदशसमः कौमारलक्ष्मीयुतः
स्वीयाऽदृष्ट-चरातिसुन्दर-वचोभिः पूरयन्नालयम् ।
तावत्कालमसौ हि नो परिदधावुक्तोऽपि पूर्णं पटं
कैश्चित्तत्र तिरस्कृतोऽवददथो एभिर्भवेत् किं भुवि ?।।३५।।

तैर्हैमालयसाधुभिः शिशुरयं दृष्टस्तथाऽऽशैशवात्
तत्रत्यश्च परीक्षितुं तदभयानन्दः स योगीश्वरः ।
अत्रागत्य निजस्थितिं पितृवने चक्रे च यो निर्जने
सोऽत्यन्तोग्रमतिर्बभूव च तदा बालेषु रुष्टो महान् ।।३६।।

एतस्मिन्त्समये तु वण्डुलभुवश्चारात्कदाचित्क्वचित्
सन्न्यासीह मुदा समागत इति श्रुत्वा कुतश्चित्ततः ।
भोलानाथ इहाभवत्तु परमोत्को दर्शनायास्य यो
भाग्यं किन्तु दिने तु तत्र गमनाय प्राभवन्नैव सः ।।३७।।

दृष्टेष्वेव हि बालकेषु च महाकोपान्वितो यो यति-
र्मङ्क्ष्वादाय स लोष्टकं व्रजति निक्षेपाय बालोपरि ।
ज्ञात्वैतन्नहि कोऽपि तत्र च यतेरासन्नदेशं गतो
भोलानाथ इदं चकार चलितुं बुद्ध्वा मनस्तत्र सः ।।३८।।

पर्यालोच्य तदा समं च विषमं कृत्वा ततो निश्चयं
यास्यामः सखिभिः समं च रजनौ तत्र श्मशानावनिम् ।
क्रीत्वैकेन तथाऽऽणकेन पनसं स्थूलं सुपक्वं तदा
गोशालापटले दिने सुमतिमान् संस्थापयामास सः ।।३९।।

तस्मिन्नेव दिने तदीयजननी शेते स्म नो सा चिराद्
भूयो बालक एष कार्यनिरतां तामाजुहावाऽऽदरात् ।
'मातः सम्विश' तस्य मिष्टवचनं श्रुत्वा सती सा पुनः
सम्प्राप्यास्तरणं तदा मृदुमयं शेते स्म सैषा भृशम् ।।४०।।

तत्पश्चाद् दृढनिश्चयः शिशुरसावुत्थाय तूर्णं तदा
शय्यातः प्रययौ गवालयपदं नेतुं फलं रक्षितम् ।
नीत्वा तत्पनसं ततः स समयं दृष्ट्वा न याताश्च ते
सैकाकी तु जगाम पूर्णपदवीं क्रोशात्मिकां बालकः ।।४१।।

गत्वा दूरत एव तत्र ददृशे तेनाग्नि-पिण्डं महद्
चित्ते तस्य यदोदियाय न पुनर्भीतिस्तदग्रे पुनः ।
तत्रापश्यदसौ न बह्निरयमस्त्येतत्तु साधोरहो
कायान्निर्गतमेवमस्ति विपुलं तेजो महद्दारुणम् ।।४२।।

सन्न्यासी त्वयमेव तत्र मनसा निश्चित्य गत्वा पुरो
दृष्ट्वा तत्र तदागतं किल शिशुं हा साधुरेषोऽक्षिपत् ।
रुद्रीभूय बहून् च लोष्टनिचयान्, संस्थाप्य सोऽग्रे फलं
हस्ताभ्यां च तमाददे निकटतो वंशं च कञ्चिद्गुरुम् ।।४३।।

तत्रोवाच पुनर्नतेन शिरसा सन्न्यासिनं तद्वचः
'कस्मात्त्वं घृणितं करोषि सुयते, कार्यं तु तादृक् सदा' ।
सन्न्यासी च तमीदृशं विनयिनं दृष्ट्वा च बुद्ध्वेप्सितं
शान्तीभूय जगाद मुञ्च च शिशुं वशं स्वहस्तस्थितम् ।।४४।।

एतेनोक्तमथ त्वमेव निजहस्तान्मुञ्च लोष्टानिमा-
नित्थं सन्धिमुभौ विधाय किल निक्षिप्तौ द्रु-लोष्टौ क्रमात् ।
साधुर्यद्यपि दूरतः परिजहौ हस्तस्थ-लोष्टादिकं
बालः शंङ्कित एष चाक्षिपदमुं चारात्तु वंशं तदा ।।४५।।

एतस्मै पनसं ददौ स मतिमान् योऽरिक्तहस्तस्तदा
शास्त्रज्ञश्च ततः स साधुरखिलं भङ्क्त्वा द्विधा तत्फलम् ।
सद्यो भक्षितवानसौ परमतश्चक्रे च वार्ताः पुन-
स्तास्तास्तत्र शिशूचिता बहुविधा आत्माशयं पृष्टवान् ।।४६

'भूयस्साहसमेव ते नु मयका दृष्टं विना केनचित्
त्यक्त्वा स्वान् स्वत एव चागतवतो, नान्यत्र दृष्टं क्वचित् ।
पन्थानं सकलं च साहसवतोऽतिक्रम्य वा मत्पुरो
गाढान्धे तमसेऽजनेऽतिविकटे मध्येवनं भीषणे' ।।४७।।

'आत्मानं स्वयमेव नो परिचिनोषि त्वं शिशो साम्प्रतं
सम्प्राप्ते समये ततो यदभविष्यस्स्वैस्तपस्सञ्चयैः ।
तत्रानेहसि नैजरूपमखिलं ज्ञातासि सर्वं क्षणाद्'-
इत्याभाष्य निवृत्तये त्वनुमतिं स्वीयां ददावादरात् ।।४८।।

भोलानाथो विनतशिरसा तञ्च सन्न्यासिराजं
नामं नामं पुनरपि पुनश्चापि लब्ध्वा तदीयम् ।
आशीर्वादं प्रणत-सुलभं सर्व-कल्याणभाजं
तेनाज्ञप्तः प्रति निजगृहं स प्रतस्थे तदैव ।।४९।।

प्रत्यावृत्य ततः शिशुः स्वजननीं दृष्ट्वा सुखी निद्रितां
नक्तं चापि तदा विलुप्तमभवत्प्रायः स भीत्या गृहम् ।
एवं यः परकाल एव च गुरुभ्राता बभूवास्य हि
सागत्यात्र तदीयवृत्तमभयानन्दः स बुद्ध्वा गतः ।।५०।।

लब्ध्वा योऽभयतोऽभयं च महिमानं स्वस्य चैवोभयं
ज्ञात्वा तन्निजजन्मकारणमहो गूढोऽपि मूढो यथा ।
आदिष्टः शुभदिष्टकं व्यगणयद्दिष्टानुसारं ततो
यावद्दिष्टिदयोदयो नहि भवेन्नो तावदिष्टं भवेत् ।।५१।।

अस्माभिर्निजबुद्धितोऽशिवमयं यन्निश्चितं मङ्क्षु हि
श्रीविश्वेशकृपावशात्तदपि सूते मङ्गलं कालतः ।
एतत्तत्र प्रगाढनिश्चयवतां लभ्यं भवेन्नान्यथाऽ-
तः पश्चादभवत्प्रवृत्तिरमला साऽऽश्चर्यसिन्धूपमा ।।५२।।

बालोऽयञ्च यदा चतुर्दशसमः किं वा तदेकाधिकः
कैशोरं न गतं तदापि सकलं चाञ्चल्यमूनं स्थितम् ।
सोपानाच्च हठात्तदाऽवतरणेऽलर्केण हा केनचित्
सन्दष्टः सहसा स्वकर्मवशतः स्वस्याङ्घ्रिदेशे क्वचित् ।।५३।।

अन्यत्रान्वितचेतसोऽवतरतो बालस्य लोलस्य हा
हंहो, कुक्कुरदंशनं यदि भवेन्नो चिन्तयामास यः।
तत्पश्चाच्छनकैश्च वर्ष्मणि विषं विस्तारमाप्तं पुरा
वैदेह्यां दनुजालयस्थितिभवं वृद्धं यथा लाञ्छनम्।।५४।।

तत्रत्यानखिलाञ्जनान्तदवदद्वृत्तं व्यथा-सम्भवं
तस्याऽभूत्तु कलेवरं हि कमनीयं यन्त्रणायन्त्रितम्।
सद्यस्तत्र तदोपचारमखिलं श्रीभूतनाथोऽग्रजः
सद्वैद्या विषवारणायनविदश्चक्रू रहस्यान्विताः।।५५।।

लाभोऽभून्न ततोऽखिलौषधिचयैर्दृष्ट्वा गृहस्था जना
नीत्वा बालममुं ययुः सपदि ते 'गोदालपाड़ा'पदम्।
शान्ता नो हि विषक्रियाऽभवदतो भूयस्ततो बालकः
स्थानं मङ्क्षु समागमत्स हुगलीमारोग्यमाप्तुं खलु।।५६।।

तत्राध्यक्षोऽवसदथ पितृव्यस्य यो बाल्यबन्धु-
र्गोधूमक्षोदकरणविधेरालयं तस्य गत्वा।
काले जाते किल बहुतिथे नाऽभवद्रोगशान्ति-
र्बुद्ध्वा सर्वं शिशुरयमभूद् यो हताशस्तदानीम्।।५७।।

नष्टाशो जीवन-सरणितः कञ्च मार्गं न दृष्ट्वा
भोलानाथो मम हि मरणं युक्तमेवेति मत्वा।
उक्त्वा नो किञ्चिदपि निजचित्तस्थभावं तदानीं
सैकाकी प्राचलदयमितो यत्र कुत्रापि गेहात्।।५८।।

सन्ध्यायां च ततो यदा दिनपतिः सोऽस्ताचलं तं गतो
मत्वा जीवन-सूर्यमेव स निजं चास्तंगतं सर्वथा।
सत्पुण्या-चरण-प्रवीण-हृदयाम्भोजर्षिभिः सेवितं
गङ्गातीरमुपाजगाम विमलं यो मर्तुकामः स्वतः।।५९।।

भोलानाथस्त्रिदश-तटिनी-तीरदेशे तदानीं
तत्रापश्यत्कमपि यमिनं प्रौढभाभासितान्तम्।
स्वैस्तेजोभिर्दिनपतिममुं यस्तिरस्कृत्य योगी
गेहं गन्तुं धुरि परवशं तं चकाराऽचिरेण ।।६०।।

इति परवशचित्तस्तञ्च दृष्ट्वा बभूव
निजमरणमतिं यश्चेतसश्चापि हित्वा।
अथ विनतहृदा तद्दर्शनं सन्ननाम
यमिन इति पवित्रं मानसे सम्विभाव्य ।।६१।।

सपदि स च यतिर्दृष्ट्वा तथाऽऽयातमेनं
विषमविषमरूपं सस्मितास्याम्बुजश्रीः।
अयमपि किल दृष्ट्वा योगिराजेश्वरं तं
पुनरपि च निजासूनागतानेव मेने ।।६२।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषश्रयः।
एष श्रीमनुदेवशाब्दिककविस्तस्य प्रबन्धे मुदा
सर्गश्चारुविशुद्धवैभवमहाकाव्ये तृतीयोऽभवत् ।।६३।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुत-*
*मनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे*
*महाकाव्ये तृतीयः सर्गः ।।*

# विशुद्धवैभवं महाकाव्यम्

## चतुर्थः सर्गः

आदित्योऽसौ भुवि तदुभयोर्मेलनं तद्विलोक्य
नैजं गेहं झटिति गत आश्वस्तचित्तस्तदानीम् ।
दृष्ट्वा संन्यासिनमथ च राजज्जटाजूटजुष्टं
भोलानाथो लिखित इव भित्तौ स तस्थौ चिराय ।।१।।

उन्मज्जन्तं पुनरपि पुनस्तं निमज्जन्तमस्मिन्
गङ्गायाः पाथसि सह निजेनापि कुर्वन्तमम्भः ।
गाङ्गं भूयो विमलमथ तादृक् स्वसामर्थ्यतश्च
भोलानाथः परमचकितोऽसौ बभूवाचिरेण ।।२।।

शान्तं तत्तस्य मुखकमलं चक्षुषी स्नेहगर्भे
पुञ्जीभूयेव भुवि पुरतः संस्थितः पुण्यराशिः ।
मन्ये नूनं वृजिनमययादःपतेरूर्मिसङ्गाद्
औवौंघात्त्रातुमिव भुवनं यः समायात एषः ।।३।।

सन्न्यासीशोऽप्रतिम-तपसा स त्रिकालज्ञ आसीद्
भोलानाथं तमपि बुबुधे वृत्तमेतत्तदीयम् ।
दृष्ट्वैव द्राङ् मृदुलवचनैस्तं पुनर्जीवयन्यो
धर्मस्नातेन निजमनसा तत्तदा व्याजहार ।।४।।

'वत्स त्वं हे गुरुतरभिया जातभीतिर्विभेषि ?
गुर्वी पीडा तव भवति किं ? त्वां तु स्वस्थं करोमि' ।
इत्युक्त्वाऽसावनुपुलिनदेशं शनैरेत्य योगी
भोलानाथस्य शिर इह पस्पर्श हस्ताम्बुजेन।।५।।

हस्तस्पर्शेन सपदि बभूवैष नीरोग एव
तेन ज्ञातं मम शिरसि पीयूषधाराऽवहत्किम्? ।
भोलानाथाय यतितिलकोऽसौ ददावौषधञ्च
तत्रैवास्मै तदपि परमं भोजयित्वा पुरस्तात् ।।६।।

प्रत्यागन्तुं प्रति निजगृहं स्वामनुज्ञां ददौ यो
नीरोगीभूय निजभवनं सागतः सद्य एव ।
भोलानाथस्त्रिदशतटिनीतीरदेशं परेद्युः
गत्वा तं सप्रणति च महापूरुषं द्राग्ययाचे ।।७।।

स्वामिन् वन्द्याऽहमिह भवता जीवितोऽतो भवन्तं
नाहं मुञ्चामि परकृपया दीक्षितं मां कुरुष्व ।
आत्मानं को जगति गतिशीले कृतज्ञो भवेन्न ?
मत्वा हंहो, पशुमिव हठादुत्तमर्णेषु तेषु ।।८।।

हस्तस्पर्शे विलयमगमद् यन्त्रणा तस्य सद्यः
तत्त्वे ज्ञाते विषयविषयेऽहङ्कृतिः सा यथैव ।
ब्रह्माण्डेऽस्मिन् विपुलतपसां योगिराजाधिराजां
नाऽसाध्यं चास्ति किमपि यदा किं तदा चित्रमत्र ?।।९।।

भोलानाथस्त्वमृतनिधिनैवाऽभवत्स्नात एव
पुण्यं तस्मात्प्रभृति परितो वेष्टयित्वा स्थितं किम्? ।
आहोस्विद् योगभवविभवः पावयामास भूयः
किं वा दुर्गा स्वविमलतमाङ्के तु जग्राह चैनम् ।।१०।।

उक्तं तेनापि शृणु वचनं मामकीनं वटो हे!
नैषोऽहं ते गुरुरिति, गुरुस्तावकीनोऽन्य एव ।
मान्यस्ते यो जगति भविता श्रीगुरुः सर्वपूज्यः
सायातेऽथो उचित-समये त्वां हि नेताऽचिरेण ।।११।।

अभ्यस्तव्यमतस्त्वयाऽऽसनमिदं चोक्त्वा तथाप्रक्रियां
बीजस्यास्य जपं कुरुष्व मतिमन् दत्वाऽथ तस्मै मनुम्।
येन स्यात्तव देहशुद्धिरविलम्बेनैव पश्चात्ततोऽ-
प्याराध्यः स गुरुर्भवन्तममलं चेत्स्वीक्रियादञ्जसा ।।१२।।

तदनु तस्य कृपाऽमृततो भवान्
तृणकणीकृत-मोहमयाऽऽमयः ।
स्वतपसा च विजित्य जगत्त्रयं
निजजनिं सफलां नु करिष्यति ।।१३।।

सपदि गच्छ वटो भवनं स्वकं
त्रिपथगाऽर्णवसङ्गम-भूमिकाम्।
परमितः प्रयतां च चलाम्यहं
समयतश्च नयामि सुनिश्चितम् ।।१४।।

स हि जगाम ततो भवनं मुदा
स्वजननीमपि सर्वमुवाच तत् ।
गरलमुक्तममुं जननी तदा
धुरि मुमोद विलोक्य सुतं निजम् ।।१५।।

द्वित्रेष्वब्देषु स खलु यदा वर्धमानाख्यपुर्या
आसीच्छ्रीकाञ्चन-नगरके शास्त्रपाठ-प्रवीणः ।
छात्रावासेऽध्ययन-समये कालधर्मं हि मत्वा
भ्रात्रा तेनेह सह निजमातृष्वसेयेन तत्र ।।१६।।

एकस्मिन्तत्र किल दिवसे विश्वरूपाख्यसाधो-
र्गत्वा क्रेतुं विपणिमथ किञ्चित्तदा वस्तु-जातम् ।
सुश्रावासावनु मुसलमानात्कुतश्चित्समेत्य
ढाकामास्तेऽतिशय-विभवः साधुरेको नु कश्चित् ।।१७।।

वसति गाङ्गजले सततं हि यः स बहिरेति विशत्यथ जीवनम् ।
सति तथा सह तेन पुनःपुनर्जलमहो हि तथैव भवत्यपि ।।१८।।

इति तस्य वचो मनोरमं धुरि बुद्ध्वा कृत-निश्चयस्ततः ।
मम दृष्टचरः स साधुरित्यथ गन्तुं कृतवान् मनः किल ।।१९।।

सख्या ययौ हरिपदेन च सार्धमेव
पश्चात्ततः सुनगरीं प्रथितां च 'ढाकाम्' ।
गत्वा च तौ ददृशतू रममाणमप्सु
सन्न्यासिनं तमथ सिद्धिमतां वरिष्ठम् ।।२०।।

सद्यस्तदङ्घ्रिकमल-द्वय-माप्रणम्य
बद्ध्वा स्वहस्तयुगलीं स उवाच वाचम् ।
'त्वत्पादपङ्कज-रजोमधुपायमानं
स्वामिन् गृहाण किल मां शरणागतं हे' ।।२१।।

दृष्ट्वा तथाऽऽगतममुं स उवाच योगी
'आनीतवानसि कथं जनमन्यमत्र' ?
उक्त्वा तथापि युवकौ निजरक्षणेऽसौ
जग्राह शक्तिवशतोऽखिल-तथ्य-वेत्ता ।।२२।।

अथ तस्य मनः परीक्षितुं यतिवर्यः स पुनस्तदुक्तवान् ।
सुमते, मयकाऽजनो यदीच्छसि गन्तुं तपसे तदेहि भोः ।।२३।।

अधुनापि शिशुत्वमस्ति ते नहि चाञ्चल्यमगाद् धृदस्ततः ।
अति-दुर्गम-साधन-स्थलं यदि गन्तुं तव साहसं भवेत् ।।२४।।

अथवा गमनाय निश्चितं यदि चित्तं कृतवान्तदा शृणु ।
सुहृदा रजनीमुखे समं ननु साक्षात्कुरु मां नयाम्यहम् ।।२५।।

इति तस्य वचः सुपेशलं श्रवसाऽऽकर्ण्य निजेप्सितं खलु ।
यतिराट्कथितस्थलं तदा स हि गन्तुं कृतनिश्चयोऽभवत् ।। २६ ।।

तरसा गृहमेत्य भावुकः सुमहत्कार्य-समुत्सुकस्तदा ।
जननीमगदन्निजेप्सितं स हि नत्वा शिरसा पदाम्बुजम् ।। २७ ।।

अतिशोकपरीतमानसा मनसा चापि तु चिन्तितं न यत् ।
अवधाय वचः सुतेरितं सहसैवापतदत्र सा सती ।। २८ ।।

हृदयाम्बुजभास्करं सुतं भुवि माता क्व नु मादृशी भवेत् ।
क्षणशस्तु निजाङ्कपालितं विसृजेत्का हि चिराय हन्त हा ?।। २९ ।।

नहि, तिष्ठ समीप एव मे किमु रुष्टो मयि रे शिशो मम ।
ननु मातृवचः कठोरकं सुतभव्याय भवेत्तु सर्वदा ।। ३० ।।

प्रविलोक्य निजां प्रसूं तदा विलपन्तीं बहुशः शनैः शनैः ।
नयनाब्जगतं जलं करैः स विधूयावददत्र निश्चलः ।। ३१ ।।

तदलर्कमहाविषक्षतं स हि साधुः किल मामजीवयत् ।
तपसा क्षणकेन तत्कृतं किमु सामीप्यमहो भवेद् वद ?।। ३२ ।।

भवती च पुरा जगाद मां सुमहाधैर्य-जलार्णवोपमा ।
मम जीवनमल्पमस्ति तत् किमु तेन प्रभुसेवनं विना ?।। ३३ ।।

मयि तत्र गते ततः परं स्वतपोराशिजितप्रपञ्चके ।
वचनात्तव सिद्धसिद्धिकः पुनरेष्यामि तवाङ्घ्रिपङ्कजम् ।। ३४ ।।

शृणु कुक्कुर-दन्तदंशनात्तव पुत्रः कृपयाऽत्र जीवितः ।
भुवि येन कथं स वै पुमानपकर्तुं प्रभवेत्कदा मयि ?।। ३५ ।।

सुनिशम्य वचः सुयुक्तिकं जनिसाफल्य-निदान-पूरितम् ।
मुखजन्ममुखोचितं यतेरनुगन्तुं तनयं मुदाऽऽदिशत् ।। ३६ ।।

स ततो विनयेन मातरं भुवि भूयः शिरसा नतेन ताम् ।
अतिमङ्गलमाप्तुमादराद् धुरि नत्वा वचनं ययौ गृहात् ।।३७।।

अतिधन्यमिदं नु जीवनं यदि लब्ध्वा भुवि मानुषं वपुः ।
त्रिजगद्व्यसनं विधूय यो भगवद्दर्शनमाप्तुमीहितः ।।३८।।

उचिते समये च तौ पुनर्यतिनिर्दिष्टपदं समागतौ ।
स तयोः किल चक्षुषी पटैरपि बद्ध्वा पुरतो ययौ स्वयम् ।।३९।।

रजनौ स महातमिस्त्रके सहमित्रो यतिनाऽगमत्तदा ।
इह दिव्यपदाऽभिलाषिणां किमसाध्यं त्रिजगत्कटाहके ।।४०।।

युवकौ परिहीन-वासनौ प्रभुपादाम्बुज-दर्शनेच्छुकौ ।
नर-जन्मफलाऽभिलाषिणौ सह सन्न्यासिवरेण जग्मतुः ।।४१।।

तपसा तिमिरं महत्तदा ननु भित्त्वा सकलं ययौ मुदा ।
इव मोहमयाऽऽमयं यतिः स हि मोक्षं जननार्जितेन तु ।।४२।।

तावुभौ यतिकराङ्गुलिद्वयं जग्मतुस्तु शनकैः स्वपाणिना ।
तां पदेन युवकौ सृतिं च सङ्गृह्य कोमलतृणच्छटाऽऽवृताम् ।।४३।।

योगिराट् तु युवकौ तपस्विनौ व्योम-मार्गगतिना निनाय तौ ।
वायुचक्रमपि तत्सुदुर्गमं न्यक्चकार निजशक्तिसारतः ।।४४।।

एवं दिशां च सकलामतिवाह्य पश्चात्
कल्यं यदाऽभवदहो सहसैव योगी ।
नेत्रं द्वयोः सपदि बन्धनतो मुमोच
सूर्योदयाद्विकसितं कमलं यथैव ।।४५।।

प्रान्तं च तौ ददृशतुर्नयनाभिरामं
प्रोत्तुङ्ग-शृङ्ग-गिरिराजि-विराजमानम् ।
तन्मध्य एव रुचिरो हि विभाति कश्चिद्
देवालयोऽप्रतिम-चारु-विचित्र-शोभः ।।४६।।

तन्मन्दिरे जयति साऽष्टभुजा हि देवी
देवेश्वराऽधिपति-पूजित-पादपद्मा ।
सम्पूर्ण-विश्वजनन-स्थिति-नाश-कर्म-
प्रस्तावन-प्रतिसमापन-चुञ्चु-लीला ।।४७।।

हरिपद-सहितेन तेन सद्यः
सुरुचिरवङ्गभुवो हि रात्रितोऽत्र ।
यति-नृपति-कराङ्गुलिं गृहीत्वा
कथमिव लब्धमिदं पदं न बुद्धम् ।।४८।।

कलकल-वि-कुलाऽऽकुलाऽऽ कुलाया
निगम-समूह-समूह-योग-योगा ।
फल-दल-तरु-राजि-राजिता या
रुचिरुचिरा विमलाऽवनी वनीयम् ।।४९।।

तदनु च बहुशः कृतेऽनुयोगे
विलसति विन्ध्य-गिरिस्तदैष बुद्धः ।
इयमपि पुरतस्तु मन्दिरस्था
सुरगण-चर्चित-विन्ध्यवासिनीति ।।५०।।

स यतिकुलपतिश्च तौ युवानौ
इह भुवि तिष्ठतमित्युदीर्य वाचम् ।
गिरिनृपति-सुतालयस्य देशे
निकटतमे प्रययौ निजेष्टदेशम् ।।५१।।

भयमपि मनसा त्वया कदाचि-
न्नहि करणीयमतो हि कालतोऽहम् ।
पुनरपि च निजेच्छयाऽऽगमिष्या-
म्यपि दिवसेषु गतेषु चात्र पश्चात् ।।५२।।

अन्तर्हिते यमिनि तौ भयभीतचित्तौ
तूर्णं बभूवतुरिमौ सहसैव हन्त ।
यौ नो कदाचिदपि नैजगृहाद्विमुक्तौ
स्यातां कथं विकटभीमपशौ वनेऽस्मिन् ।।५३।।

काले याते कियति तदनु प्रागतोऽसौ कुतश्चित्
कश्चित्तत्रैव किल मुखजो यश्च वर्णेन कृष्णः ।
आहार्यं वस्तु बहुविधमाभ्यां स दत्वाऽनु यातः
कोऽसौ कस्मात्कथमिह समायात एतन्न बुद्धम् ?।।५४।।

भुक्त्वा सर्वं परमपरितृप्तिं युवानौ प्रयातौ
भोलानाथोऽपि च हरिपदस्तत्र साधूपदिष्टौ ।
कृत्वा विश्राममथ च रजन्यां तु तेनैव भूयो
दत्तं भुक्त्वाऽपि नहि बुबुधाते अयं कः कुतो वा ?।।५५।।

आदौ तेन विचारितं परिचितः साधुस्तदाऽऽयास्यति
सन्ध्यायां किल पूर्ववज्झटिति नौ नेष्यत्यथो साऽऽग्रहम् ।
जातेऽनेहसि चागमन्नहि यदाऽभूत्सोऽत्र चिन्तातुरो
जातं तस्य मनस्तदातिकठिनाटव्यां सुभीतं मुहुः ।।५६।।

परिचितं विपिनं न बभूव तद्
विकट-हिंस्र-महामृग-संकुलम् ।
तदनु तत्र महातिमिरे पुन-
र्भयमये समये व्यथितोऽभवत् ।।५७।।

आश्रित्य तत्सपदि काञ्चन वृक्ष-शाखा-
मात्मानमेव तरसा परिधेय-वस्त्रैः ।
बद्ध्वा दृढेन विधिना मतिमान् कथञ्चिद्
रात्रिं च तत्र विपिने क्षपयाञ्चकार ।।५८।।

एवं द्वितीय-दिवसेऽपि च जङ्गलेऽस्मिन्
कृष्णाद्विजेन च सता किल भोजितस्तु ।
तेनैव तत्र विधिना तरुशाखिकायां
बद्ध्वा दृढं हि रजनौ स्थित एष आसीत् ।।५९।।

तस्मिन्दिनेऽतिगहने गहने हि तस्मिन्
सिंहाश्च तेऽतिविकटाः सहसा जगर्जुः ।
देवी-पदाम्बुरुह-युग्मसुपूत-चिह्न-
मेनं समेष्यति ततःप्रभृतीर्ष्ययैव ।।६०।।

श्रुत्वैव तच्च सहसा युवको महत्या
भीत्या पुनः पुनरपीह तदा रुरोद ।
मात्रङ्कपालित-सुकोमल-गात्र एष
घोरे वनेऽतिललितो नहि जातु साऽऽसीत् ।।६१।।

सपदि भिया शनकैर्विचारितं
सह सुहृदा मम हा भविष्यति ।
किमु अधुना मरणं ह्यनीप्सितं
न हि जननी-विरहः शुभावहः ।।६२।।

इति बहुधा हृदये विचारिते
स हि सहसा ससुहृद् ददर्श तत् ।
वरमथ पश्चिमदिक्षु गोलकं
रुचिरुचिरं किरणावलीमयम् ।।६३।।

अनिकटतः सुमहा-प्रभायुतं
वियति च शून्यसृतौ ततश्च तत् ।
सपदि समागतमात्मनो दिशं
प्रति शनकैरवधूय दिक्पथम् ।।६४।।

नव उदितः किमु सूर्य-मण्डलः
सकल-कलाकलितो नु चन्द्रमाः ?
छविनिचयः स पुराऽवधारितोऽ-
थ समयतः क्रमशस्तदन्तिके ।।६५।।

अथ युवकौ स्तिमितेक्षणाम्बुजौ
वर-धरणी-रुह-काण्ड-वेष्टितौ ।
तमथ विलोक्य रुचिच्छटालयं
सपदि तदा चकितौ बभूवतुः ।।६६।।

अथ निकटे च यदा बभूव तत्
सपदि ददर्श मनुष्यशरीरिणम् ।
अपि स मनुष्य-शरीरजो महान्
रुचिनिचयः परितः प्रकाशितः ।।६७।।

अथ पुरतस्त्ववतीर्य मण्डलं
द्युतिनिचयस्य च शून्य-वर्त्मनः ।
निज-वचनैरतिमङ्गलालयै-
र्विगतभयौ कृतवन्मुदा तदा ।।६८।।

विमल-तपः-प्रयता हि भैरवी
सुकृत-चयैरिव निर्मिताऽभवत् ।
अवनि-धरेश्वर-कन्यकेव या
निजविभवैः सततं स्म राजते ।।६९।।

सुभगजटाः परितः शिर स्थिता
असित-भुजङ्गनिभाः सुदर्शनाः ।
अतिसित-कम्बुगलेऽक्षमालिका
मुख-कमलं करुणाऽमृतालयः ।।७०।।

अतिकरुणा-मसृणैर्मिताक्षरै-
र्निजवचनैर्युवकौ ससान्त्वनम्।
मधुमधुरं वचनं ह्युदैरयद्
झटिति च बङ्गगिरा शुचिस्मिता ।।७१।।

'वत्स, रोदिषि कथं? चिराय हे!
रोदनं तव विलोक्य भूरि तत्' ।
नाहमेव तदपारयं किल
स्थातुमत्र च समागता ततः ।।७२।।

इति तञ्च निजांङ्ककोटरे
कथयित्वाऽखिल-पुण्य-सागरे ।
जननीव मुदाऽतिवत्सला
धुरि जग्राह तदा स्वतः खलु ।।७३।।

अथ सोऽपि ततोऽनु पृष्टवान्
वद का त्वं क्व कुतः कथं किल ?
मम रोदनमेव वा कथं
त्वयका ज्ञातमिहागता कथम् ?।।७४।।

तव चागमनादहं महा-
नभवं वै चकितो वदाऽखिलम्।
इति तस्य वचोऽवधाय सा
मधुरं वाक्यमुवाच भैरवी ।।७५।।

प्रकृतिरहस्यमिदं सुदारुणं
तव निकटे सकलं हि साम्प्रतम्।
इह जननीव च मामवेहि भोः
सुतसदृशो भवसि त्वमत्र मे ।।७६।।

समये मिलिते ततः परं
सुत हे ज्ञास्यति मां नु काऽस्म्यहम् ।
भुवने क्वचिदेव तिष्ठ वाऽ-
सि समीपे हि ममैव सर्वदा ।।७७।।

तव नास्ति भयं कुतोऽपि तत्
स्मरणेनैव सदाऽऽव्रजाम्यहम् ।
अधुना मयका तु गम्यते
गतभीतिः सुहृदाऽत्र तिष्ठ हे ।।७८।।

इति सा निजपाणिपल्लवैः
कथयित्वा विमलं वचस्तदा ।
युवकौ विभयौ तपोधना
ननु कृत्वाऽथ गता हि भैरवी ।।७९।।

अथ पञ्चष-वासरान् ततो
महिते विन्ध्यगिरौ स्थितौ हि तौ ।
तदनन्तरमेष योगिराट्
सहसा तत्र समागमत्स्वतः ।।८०।।

अथ पूर्ववदेव चक्षुषी
स हि बद्ध्वा च तयोस्तदाऽचलत् ।
बहुदूरमितो यदाऽऽश्रमं
सुमहा-पूरुषजुष्ट-मागतौ ।।८१।।

आसीत्सोऽयं यमनियमवान् ज्ञान-विज्ञानचुञ्चु-
र्नीमानन्दोऽत्र जगति परिव्राजकाचार्यवर्यः ।
भोलानाथं तमपि किल संस्थाप्य तत्रैव तूर्णं
सार्धं मित्रेण हरिपदनाम्ना, ययौ कुत्रचित्तु ।।८२।।

स इतः परमत्र चागतः
सह नीत्वा युवकौ निजेन तौ ।
'तुकलीं च समागतो गिरिं'
फलशाखाऽऽवृतवृक्ष-सङ्कुलम् ।।८३।।

तत्र काचिदपि पूर्ण-योगिनी
न्यक्कृतत्रिदश-लोकवैभवा ।
वस्तुतस्तु निगमागमेश्वरी
पूजिता वसति तद्गुहालये ।।८४।।

श्यामाऽभिधाऽखिलतपः-सुपरीतमूर्तिः
श्यामाऽपरेव भुवि सिद्धिमतीषु मुख्या ।
एषा तदा बहु-समादर-पूर्वकं हि
तूर्णं चकार च तयोरशन-व्यवस्थाम् ।।८५।।

भूयस्तया प्रयत-पुण्य-परीत-मूर्त्या
श्रीश्यामया बहु-समादृत एष तत्र ।
सार्धं मुदा स्वसुहृदा दिनमेकमेव
प्रीत्यान्वितः सकुशलं किल स त्वतिष्ठत् ।।८६।।

गतवति समये ततो यतीन्द्रः
कियति ययौ विषयान्तरं स पश्चात् ।
पुनरपि दिवसाऽवसानकाले
नयनयुगं च तयोः पटेन बद्ध्वा ।।८७।।

रात्रिर्गता सपदि सूदित एव सूर्यः
पोस्फुट्यमान-नलिनैश्च सरो मनोज्ञम् ।
कूजत्पतत्रि-कुलनम्र-महीरुहाग्रं
माङ्गल्यकल्यमभवत्तदनु प्रसन्नम् ।।८८।।

सन्न्यासिना नयनबन्धनतो विमुक्तौ
भव्यान्वितौ ददृशतुर्युवकौ तदानीम् ।
स्थानं शुभास्पद-मनोहरण-प्रवीणं
योग्यङ्घ्रिवारिज-रजः-परिपूत-पृष्ठम् ।।८९।।

इति सह यतिना तौ साधना-सिद्ध-पीठं
श्रुतिगलदमृताऽकूपारसारैक-गेहम् ।
भ-ख-रवि-शशि-विज्ञानीय-विद्या-निदानं
धुरि समुपगतौ विश्वेशवाञ्छैकलभ्यम् ।।९०।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारहीरप्रभा-
गोपीनाथमहागुरूदितकृपापीयूषयूषश्रयः।
एष श्रीमनुदेवशाब्दिककविस्तस्य प्रबन्धेऽधुना
सर्गश्चारुविशुद्धवैभवमहाकाव्ये तुरीयो गतः ।।९१।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुत-*
*मनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे*
*महाकाव्ये चतुर्थः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## पञ्चमः सर्गः

समस्तजीवाद्भुतभव्यहेतवः सदा चलत्कालसमुद्रसेतवः ।
निजप्रभावप्रणिरुद्धभूमयो जयन्ति तास्ता ननु सिद्धभूमयः ।।१।।

आ सृष्टितः शास्त्रमहापयोधिमन्थायमाना जितखण्डकालाः ।
यमादिकाष्टाङ्गसमाधियोगानुष्ठाननिष्ठा यतयो जयन्तु ।।२।।

तेषां तपोराशिमहाप्रभावोद्भूताःस्वलोकान्वितनित्ययोगाः ।
सदैव सिद्धाः खलु सिद्धसेव्या जयन्ति दिव्या भुवि भूमभूमयः।।३।।

विधातृसृष्टेश्च महत्त्वपूर्णा महामहायोगिवरैकगम्याः ।
ताः खण्डकालस्थितशक्तिमुक्ताःपरं महाकालवशंगता याः ।।४।।

योगीन्द्रवर्या विपुलैस्तपोभिरासृष्टि-जन्मार्जित-पुण्य-सङ्घैः ।
सूक्ष्मास्ततः स्थूलमयीः प्रकाश्याः कुर्वन्ति ते तादृशसिद्धभूमीः ।।५।।

अखण्ड आकाशमहाकटाहे लम्बायमाना बहुलोकपङ्क्तयः ।
परस्पराऽऽकर्षणसूत्रबद्धाः परस्परार्थास्तु विधातृसृष्टाः ।।६।।

ततः परं तां परितो विभाति नभो महाशून्यमहो विशालम् ।
सृजन्ति तत्रैव निजानुरूपान् तपःप्रभावैर्यमिनः स्वलोकान् ।।७।।

न तत्र किञ्चित्तु निजस्य काम्यं सर्वं विधेयं हि परार्थमेव ।
सदा क्रियाऽभ्यासजिताखिलानां योगीश्वराणां न निजाय किञ्चित् ।।८।।

केचित्स्वयं कालगतेर्निवृत्ताःसदात्मसौख्याम्बुधिमग्नचित्ताः ।
तपःप्रभावेण विजित्य कालमिमे महाकालमुखं व्रजन्ति ।।९।।

ततोऽपि ये सिद्धतरा यतीन्द्राः स्वयं समुत्तीर्य च कालराज्यम् ।
स्वकीयभक्तानधिकारिणश्च दयालवो मोचयितुं यतन्ते ।।१०।।

वन्द्याः सदैवानतमूर्धतस्ते ये ये जगत्त्रातुमिहैव लग्नाः ।
अहो, महादुस्तरकालराज्यान्निष्कामचित्तास्तु परार्थहेतोः ।।११।।

परोपकाराय सतां विभूतिर्यदुक्तमेतत्कविभिः पुराणैः ।
यथार्थतो योगिवरेषु सञ्जाघटीति नित्यं विजितेन्द्रियेषु ।।१२।।

तेषां पदाम्भोरुहयुग्मरेणून् सदैव भक्त्याहमहो नमामि ।
सन्तीर्य मायाम्बुनिधिं क्रियाभिर्ये कालराज्यं विजिगीषवो हि ।।१३।।

तेभ्योऽप्यथैते सततं प्रणम्याः स्वयं समुत्तीर्य च कालसिन्धुम् ।
न्यक्कृत्य भेदं सुतनिर्विशेषमुद्धर्तुकामाः किल विश्वविश्वम् ।।१४।।

संसारमेवाखिलमञ्जसैव जलाञ्जलिप्रोज्झितकालशक्तयः ।
सदा महानन्दमयं चिकीर्षवः केषां न वन्द्या वद योगचुञ्चवः ।।१५।।

सा सिद्धभूमिर्बहुवन्दनीया सम्माननीया बहुपूजनीया ।
या सिद्धयोगीश्वरचिन्तनोद्भवा भूरिप्रभावाद्भुतशक्तिसम्भवा ।।१६।।

योगप्रभावाद्भुतकर्मचुञ्चवः सिद्धेन्द्रसङ्घास्तु वसन्ति यत्र ।
अशेष-विज्ञान-निदान-भूता प्रणम्यते सा किल सिद्धभूमिः ।।१७।।

ब्रह्माण्डभाण्डस्थिततत्त्वसंघास्ते तत्त्वतो यत्र परिस्फुरन्ति ।
स्वतो महाशक्तिमतां प्रभावात्प्रणम्यते साऽद्भुतसिद्धभूमिः ।।१८।।

लोकेश-नारायण-पञ्चवक्त्र-पुरन्दरादि-त्रिदशाधिपा ये ।
स्वयं निवासाय कृतप्रयत्ना यत्रैव सेयं बत सिद्धभूमिः ।।१९।।

यत्र स्थितानां यतिसञ्चयानां सदाऽऽनुकूल्यं वचनाद्भजन्ते ।
पृथ्वीपयोवह्निमरुन्नभांसि सा सिद्धभूमिः सततं प्रणम्या ।।२०।।

हा हन्त, यत्रैव हि कार्यकारणे शैथिल्यमाप्ते तु निजस्वरूपम् ।
विस्मृत्य तूर्णं समयं विजित्य सा सिद्धभूर्योगिजनैकसेव्या ।।२१।।

स्थूलाऽपि सूक्ष्मा, प्रकटाऽपि लीना दृश्याप्यदृश्या कथिताऽप्यकथ्या ।
गम्याऽप्यगम्याऽवनिजाऽप्यभौमा विलक्षणैषा किल सिद्धभूमिः ।।२२।।

सा चित्स्वरूपा दिनरात्रिशून्या सिद्धैकबोध्या तपसां प्रसूतिः ।
अशेष-संसार-विमुक्ति-दात्री विभाति नित्यं ननु सिद्धभूमिः ।।२३।।

स्वदेहशुद्धौ तपसा कृतायां न भूमिसिद्धिस्तु ततोऽवशिष्टा ।
तस्यां कृतायां विपुलैस्तपोभिः सिद्ध्यत्यहो तादृश-सिद्ध-भूमिः ।।२४।।

देहो यथा स्थूल इहेदृशानां भूमिस्तथैवास्त्यपि तादृशानाम् ।
क्रमेण सूक्ष्मेऽथ कृतेऽभिमाने जगत्समग्रं खलु तादृशं स्यात्।।२५।।

ततश्च चिद्रूपमयी स्थितिर्यदा द्रष्टुर्भवेत्तत्र जगच्च चिन्मयम् ।
एतास्ववस्थासु समागतासु साऽऽविर्भवेच्चिन्मयसिद्धभूमिः ।।२६।।

हिरण्यगर्भस्य महाप्रभावाद् ब्रह्माण्डभाण्डं त्वभिमानतोऽस्ति ।
निजाभिमानादपि ये तु सिद्धाःसृजन्ति लोकांश्च निजानुरूपान् ।।२७।।

ता भूमयो नैव तु सर्वगम्या न प्राकृता नाप्यथ रुद्धमार्गाः ।
ये सिद्ध-सन्दोह-कृपाब्धिभाजो द्रष्टुं च गन्तुं प्रभवन्ति नान्ये ।।२८।।

श्रीशैलकेदारगयाऽविमुक्तस्थाणवट्टहासादिकसिद्धभूमयः ।
लोकास्तु तेजःपवमाननाकतत्त्वेषु ते ते खलु सन्ति सर्वे ।।२९।।

तेषामिहांशानवलम्ब्य तत्तन्नाम्ना पृथिव्यामपि तीर्थजातम् ।
श्रीभारतेऽस्मिन् स्वतपस्ययैव चक्रुः पुरा तेऽद्भुतयोगिनो ये ।।३०।।

इमे च लोका निजमूललोकसंस्पर्शयुक्ताश्च तदात्मरूपाः ।
सत्साधनोन्मीलितनेत्रकञ्जास्ते साधकेन्द्राःप्रभवन्ति भोक्तुम् ।।३१।।

एवंविधा साऽद्भुत-रूप-गुप्तलोक-प्रतीकाऽत्र धरास्थिताऽपि ।
या गुप्त-रूपेण विभाति नित्यं श्रीज्ञानगञ्जाह्वयसिद्धभूमिः ।।३२।।

स्थिताऽस्त्यहो यद्यपि भूमिपृष्ठे विलीनरूपेण हिमालयेऽस्मिन् ।
नैतावता सर्वजनेन गम्या या वस्तुतः सा बहुदूर एव ।।३३।।

तत्रत्यसिद्धा विभवैकरिक्था महातपोवश्यसमस्तलोकाः ।
आगत्य तेषामनुकूलतां तां शक्ष्यन्ति गन्तुं किल सिद्धभूमिम् ।।३४।।

श्रीज्ञानगञ्जो ननु राजराजेश्वरीमठः श्रीगुरुमन्दिरञ्च ।
क्रमेण चैतत्त्रयमेव तत्र स्तरानुसारं स्थितमित्यवेहि ।।३५।।

आद्यस्तथाऽऽद्यो ननु राजराजेश्वरीमठो मध्यम एष बोध्यः ।
ततः स्थितं श्रीगुरुमन्दिरन्तु स्थानं स्मृतं सर्वपदातिशायि ।।३६।।

काशी यथा साऽस्ति शिवत्रिशूले कैवल्यदा स्वर्णमयी, धरायाम् ।
तद्योगजुष्टा खलु काशिकेयं चकास्ति नित्यं निजबोधरूपा ।।३७।।

एवंविधा सास्त्यपि चिन्मयीह महातपस्याऽऽचरणैकलभ्या ।
विभाति पृथ्व्यां च निजस्वरूपा श्रीज्ञानगञ्जाह्वयसिद्धभूमिः ।।३८।।

अथेह तद्भौमपदं शृणुध्वं धीराः समे शास्त्र-रस-प्रवीणाः ।
आश्रित्य तत्त्वं निजमूलभूतं सैषा सदा तिष्ठति भूमिखण्डे ।।३९।।

अस्त्युत्तरस्यां दिशि योगिजुष्टो हिमालयो नाम महानगेन्द्रः ।
पूर्वापरौ वारिनिधी प्रविश्य विभाति पृथ्वीमिव मातुकामः ।।४०।।

यो योगिवासार्थमिव प्रणीतो लोकैकधात्रा चतुराननेन ।
महारहस्यालय एष बुद्ध्वा योगीश्वरैश्चाप्युररीकृतो यः ।।४१।।

यस्यातिपुण्यं हि विलोक्य दुर्गा सम्पूर्ण-संसार-चयैक-धात्री ।
कन्यात्वमापद्यत शम्भुनित्यलीलैकपात्रं च निजेच्छयाऽसौ ।।४२।।

हिमालयस्यापि च पृष्ठदेशे तुषार-सारावृत-सर्वगात्रः ।
मात्सर्यमोहादिमहारयो ये स्वयं लयं यान्ति यतो निवासात् ।।४३।।

चकास्ति सिद्धेन्द्रगणैकसेव्यःस्वीयप्रभावोदितभाग्यभाग्यः ।
महाकविव्रातमुखैकवन्द्यः सोऽयं महादेवनिवासधन्यः ।।४४।।

यो निर्गुण-ब्रह्मशिव-प्रतीकलिङ्गस्वरूपो निजरूपतोऽस्ति ।
आश्रित्य यञ्चैव गिरीन्द्रकन्या सार्धं च पत्या वसति प्रसन्ना ।।४५।।

विद्याधराणां वनितासखानामावासभूमिश्चिरकालतो यः ।
दृष्ट्वा नु रूपं नयनाभिरामं पित्रालयं न स्मरतीश्वरी सा ।।४६।।

श्वैत्येन यो डम्बति पुण्डरीकं हराट्टहासानपि राजहंसान् ।
विना सदा सज्जनचित्तसैत्यं नैवोपमा यस्य हि केनचित्स्यात् ।।४७।।

चित्तस्य योगिप्रियतामवेक्ष्य यस्मिन् स्वयं सर्वजगन्नियन्ता ।
सुरासुराऽऽराधितपाद-पद्मः सहोमया तिष्ठति शङ्करोऽसौ ।।४८।।

अस्यैव कैलाशमहागिरेस्तु श्रीमानसाभ्यन्तरदेशमध्ये ।
विभाति सा चिन्मयतत्त्वपूर्णा श्रीज्ञानगङ्गाह्वयसिद्धभूमिः ।।४९।।

सा वाष्पयानेन जलन्धरं तु गत्वा पदाभ्यां च ततोऽस्ति गम्या ।
मध्ये हिमाच्छादितदुर्गमोऽध्वा, तमप्यथोत्तीर्य ततः स दृश्या ।।५०।।

नैतेन मार्गेण जगाम भोलानाथस्तु योगीशकराङ्गुलिं सः ।
ययौ गृहीत्वा किल बद्धनेत्रो मित्रेण सार्धं पवनाध्वनैव ।।५१।।

न यत्र रात्रिर्न दिवा न सायं प्रातर्न मध्याह्न इहास्ति किञ्चित् ।
या खण्डकालस्य हि शक्तितोऽस्ति मुक्तैव का तत्र तदीयचेष्टा ?।।५२।।

सम्पूर्णजैवातृकचन्द्रिकाभिर्दीप्ता सदा शारदशर्वरीव ।
चकास्ति सिद्धाश्रमपुण्यभूमिर्विनिर्मिता या स्फटिकोपलेन ।।५३।।

प्रोत्तुङ्गभूमीधरपङ्क्तिलीला नीलाभ्ररेखेव सदा विभाति ।
मध्ये च सा निर्झरिणी सशब्दं वहत्यथो योगिगुणान् वदन्ती ।।५४।।

उपत्यकायाः किल मध्यभागे क्षेत्रं चतुःक्रोशसुदीर्घमस्याः ।
राजत्यभिव्याप्य महाश्रमोऽयं सिद्धेन्द्रलीलारचनास्पदं च ।।५५।।

सिद्धाश्रमं तं परितो विशाला प्राकारभित्तिः सुदृढा विभाति ।
निषेधयन्ती प्रतिहारिणीव प्रवेशतो याऽनधिकारिजीवान् ।।५६।।

प्राकारभित्तिं परितस्तु खेयं विशुद्धसत्त्वोपमवारिपूर्णम् ।
मन्ये तु सत्त्वाम्बुधिमज्जनं विना भवेत्प्रवेशो नहि कस्यचित्तु ।।५७।।

सेतुर्बहिर्गन्तुमतस्तदूर्ध्वमेषोऽस्ति रम्यो धनुषाकृतिर्यः ।
ये देशकालव्यवधानशून्यास्तेषां यतीनामपि लोकरीतिः ।।५८।।

श्रीसिद्धयोगाश्रमबाह्यरूपमेतन्मयोक्तं निजबुद्धितस्तत् ।
सा वस्तुतो वाङ्मनसेन्द्रियैस्तैर्यद्यप्यतीताऽस्ति हि सिद्धभूमिः ।।५९।।

यत्रत्यवृक्षाः स्फुटनित्यपुष्पा गलद्रसैः पक्वफलैर्विनम्राः ।
कूजत्खगाः पल्लवलोहितास्ते सदैव सर्वर्तुगुणाभिरामाः ।।६०।।

यत्रत्यवापी वरटा-सहाय-मराल-कोलाहल-शिञ्जिताढ्या ।
पेपीयमानासवजातमोदमधुव्रतव्रात-सरोज-शोभा ।।६१।।

सिद्धाश्रमोऽयं स्तरतःसुसज्जितो नो कालमार्गातिबलेन यो जितः ।
मन्ये स्वमूर्तिं परिकल्प्य विद्या सत्पात्रवश्या स्वयमाजगाम ।।६२।।

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।'
सदैव वेदोदितवाक्यमेतत् सञ्जाघटीत्येव यथार्थतोऽत्र ।।६३।।

नारायणागस्त्यकपर्दिलल्लविश्वम्भरव्यासवशिष्ठगर्गाः ।
स्वतन्त्रवैज्ञानिकशेखरास्ते यदुक्तवन्तः किल तत्र दृश्यम् ।।६४।।

तत्रैव विज्ञानविभाग एष स्वतन्त्र एवास्ति विभागवर्यः ।
आचार्यवर्योऽपि पृथक् ततः श्यामानन्द एष प्रथितः स्वशक्त्या ।।६५।।

अस्थापयद्भूमशताब्दपूर्वं संस्कृत्य भूमिं यतिपुङ्गवोऽसौ ।
यथार्थनामाऽखिलतत्त्वविज्ज्ञानानन्दनामा कुतुपाऽपराख्यः ।।६६।।

नामानुसारं किल यस्य चाऽऽसीद् यतीश्वरस्यैव तु सिद्धभूमेः ।
तत्काकतालीयनयानुसारं श्रीज्ञानगञ्जेति यथार्थकं तत् ।।६७।।

यस्यास्य योगीश्वरशेखरस्य सार्या अनार्या अपि सन्ति शिष्याः ।
गुरूपदिष्टाः खलु तेऽपि सर्वेऽधिकारतः साधनकर्मलग्नाः ।।६८।।

सिद्धाश्रमोऽयं खलु राजराजेश्वरीमठेनैव स शासितोऽस्ति ।
आकर्ण्य नाथस्य मुदाऽऽविरासीन्मठाह्वयं मात्रभिधात्मकं हि ।।६९।।

अन्येऽपि योगाश्रमसञ्चयास्तु तत्रैव ते ते बहवो लसन्ति ।
सर्वेऽपि ते सन्ति हि राजराजेश्वरीमठस्यैव सदास्य शास्याः ।।७०।।

तत्रास्ति गेहं भवनादिकं वा नो वस्तुतः किञ्चिदपीत्यवेहि ।
न चापि तत्रत्ययतीश्वराणां भवत्यथावश्यकता गृहाणाम् ।।७१।।

अहो परिव्राजकमण्डना ये वसन्त्यथाविष्कृतनूत्नलोकाः ।
सर्वेऽपि ते सूर्य-सितांसु-शब्द-नक्षत्र-विद्या-सफल-प्रयत्नाः ।।७२।।

ब्रह्माण्डलोकात्प्रभृति प्रवीणाः शाक्ताण्डलोकं स्ववशे विधातुम् ।
ब्रह्माण्डभाण्डादपि ये विशालं लोकं विधातुं सततं समर्थाः ।।७३।।

हित्वाऽभिमानं प्रकृतिः सदैव भयेन येषामनुगामिनी सा ।
विजित्य चैनां तपसैव तीर्थस्वामीत्युपाधिं यतयो लभन्ते ।।७४।।

ततः परं साधनया महत्या जगज्जनन्याश्च कृपापरीताः ।
भवन्ति सिद्धा अपि सर्वशक्तिमन्तः समुत्तीर्य च जीवभावम् ।।७५।।

ततोऽनु तेषां न निजाय किञ्चित्कार्यं हि किञ्चित्त्ववशिष्टमस्ति ।
तथापि ते लोकहिताय भूयः स्वसाधनां तां परिवर्धयन्ति ।।७६।।

स्वयं समासादितसर्वसिद्ध्यश्श्रेष्टान्विता लोकहिताय सन्ततम्।
मोक्तुं जगत्कालपथात्समग्रं केषां न वन्द्या वद योगिनस्ते ।।७७।।

समागतोऽयं तपसेऽत्र भोलानाथः स्वपूर्वाजितकर्मसञ्चयैः ।
पश्चात्तदाविष्कृतलोकतोऽपि साऽऽकालतो लोकचयं चकार ।।७८।।

सिद्धाश्रमेणाभवदेष धन्यः सिद्धाश्रमोऽनेन च सोऽपि धन्यः ।
अभूच्च सम्मेलनतो द्वयोर्हि न्यूनत्वहानिः परिपूर्णताऽऽप्तिः ।।७९।।

वैज्ञानिकेन्द्रैर्विजितेन्द्रियौघैस्तत्रास्ति विज्ञानबलेन निर्मितः ।
आज्ञानुगः पुष्पकतुल्यवेगः स लोकसञ्चारपटुर्विमानः ।।८०।।

भिषग्वरेण्या बहुचेष्टयाऽपि मोक्तुं यतो न प्रभवन्ति रुग्णान् ।
प्राणान्तकेभ्यः सहसा गदेभ्यो विज्ञानयन्त्रैः क्रियतेऽत्र मुक्तिः ।।८१।।

एषा सहस्राधिकवत्सराणामशक्यसिद्धौ सफलश्रमाणाम् ।
वैज्ञानिकानां यतिभूपतीनां वासेन पूता भुवि सिद्धभूमिः ।।८२।।

यूनां व्रताद्याचरणे रतानां कुमारिकाणां यतमानसानाम् ।
विज्ञानशिक्षार्थमिहागतानां या पादचारैः परिपूरिताऽस्ति ।।८३।।

आहारकार्यं च तिरस्कृतानां सिद्धाधिपानां 'परहंस' भाजाम् ।
अहो सहस्राधिकवत्सराणां या सिद्धभूमिर्हि निवासभूमिः ।।८४।।

वैज्ञानिकानामपि यः समेषामेषामथाविष्कृतलोकभाजाम् ।
यथार्थनामाऽस्ति 'महातपा' यो गुरुर्यथैवापरविश्वनाथः ।।८५।।

आ सृष्टितोऽभ्यस्तसमस्तयोगविज्ञानसच्चिन्मयसिद्धमूर्त्तिः ।
रात्रिन्दिवं बाह्यजगद्विसृज्य स्वस्मिन् स्थितो यो भगवत्स्वरूपे ।।८६।।

स्वरूपतोऽनिर्वचनीयतत्त्वे सदा परब्रह्मणि लीनचित्तः।
मनोहरं तीर्थवरं मनोहरं यदा कदाचित्त्वपि याति योऽसौ ।।८७।।

तदीयशिष्यप्रमुखोऽतिशक्तिर्महातपोन्यक्कृतलेखलेखः।
जगत्त्रयासम्भवकार्यदक्षो महामुनिश्रीभृगुरामयोगी।।८८।।

सर्वातिशायी स्वतपस्यया यः सर्वेषु तत्रत्ययतीश्वरेषु।
जगज्जनिस्थानलयादिकार्यं यस्यास्ति लोलालकबालकृत्यम्।।८९।।

यो ज्ञानगङ्गाह्वयसिद्धभूमेः प्रधाननेताऽथ च कार्यकर्ता।
स्पृशत्यहो विष्णुहताऽसुराणां मेदेन दुष्टां नहि मेदिनीं यः ।।९०।।

सर्वार्थविच्छ्रीभृगुरामयोगी यो व्योममार्गेण गतागतं तत्।
स्वयं विधत्ते तपसा सदैव हा पृथ्वि रे त्वं खलु भाग्यहीना ।।९१।।

यः साम्प्रतं स्थूलशरीरतस्तु गन्तुं समीष्टे ग्रहराजलोकम्।
अन्याँश्च तान्तानपि सर्वलोकान् यो लीलया गच्छति नैकवारम्।।९२।।

न स्थूलदेहोऽपि तदीय एष षाट्कौशिको वाऽपि न पाञ्चभौतिकः।
क्रियाबलैश्चिन्मयतत्त्वपूर्णः सदा विशुद्धः खलु सिद्धदेहः ।।९३।।

यद्रोमकूपाच्च बहिर्भवन्ति वह्निस्फुलिङ्गाः परितःप्रकाशाः।
सदा क्रियाऽभ्यासरतेन ताम्रवर्णो जटाजूटधरो यतीन्द्रः ।।९४।।

महातपस्याबलतस्तु येन विनिर्मितं धाम विशुद्धचिन्मयम्।
नहि क्रियाभ्यासवतां मनस्विनां किञ्चित्त्वसाध्यं त्रिजगद्वितानेे ।।९५।।

ये दीक्षिता मन्त्ररता गृहस्था आजन्म चाभ्यस्य गुरूपदिष्टम्।
मन्त्रं ततस्ते तमथ व्रजन्ति लोकं पुनर्नैव तु मातृगर्भम् ।।९६।।

एवं तथान्ये बहवोऽपि योगिनस्तपस्यया ये विजिगीषवस्तु।
कालार्णवं भीममगाधदुस्तरं लोकोपकाराय वसन्ति तत्र ।।९७।।

आ सृष्टितः कालजयस्य चेष्टा चलत्यथैषा बहुशक्तिसाध्या ।
श्रीज्ञानगङ्गाह्वयसिद्धभूमिर्यस्याः सदाऽस्त्याकरभूतभूमिः ।।९८।।

आगत्य तत्र सुहृदा सममेव भोला-
नाथो गुरूक्तपदवीमनुसृत्य भूयः ।
आरब्धवानतिसुदुष्करसाधनां स
विश्वोद्भवस्थितिविनाशचणामतन्द्रः ।।९९।।

इत्थं त्वलर्कविषतो भुवि यस्य मृत्यु-
र्हा निश्चितोऽभवदहो किल पूर्वकाले ।
सोऽयं विधातृनियमादपि दिव्यदिव्यं
स्थानं ययौ ननु विधेश्चरितं दयार्द्रम् ।।१००।।

शापोऽप्यदृष्टतनयाननपद्मशोभे
सः क्षेमकृद्दशरथे हि बभूव तद्वत् ।
नाथस्य चापि खलु कुक्कुरदंशनोत्थ-
ज्वालावलिः सपदि सूतवती शिवौघम् ।।१०१।।

अत्रापि पूर्णनियमादिकपालनं स
कुर्वन्तथा विपुलसिद्धिचयं च लब्ध्वा ।
तूर्णं बभूव जननीचरणाब्जयुग्म-
मोमुद्यमानहृदयभ्रमरायमाणः ।।१०२।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषव्रतः ।
एष श्रीमनुदेवशाब्दिककविस्तस्य प्रबन्धेऽगमत्
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽधुना पञ्चमः ।।१०३।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतमनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये पञ्चमः सर्गः।।*



# विशुद्धवैभवं महाकाव्यम्

## षष्ठः सर्गः

श्रीलद्विजोत्तमशरीरधरा धरायां
सम्पूर्ण-वाङ्मयरहस्य-चयं ह्यधीत्य ।
येऽभूत-पूर्वतपसाऽखिल-कर्मगेहे
स्नेहोदयाच्च करुणा-वरुणालयस्य ।।१।।

सम्प्राप्य भारत-महीपटले स्वजन्म
ते साधकाः सफलयन्ति मनुष्यजन्म ।
तत्रोदिताखिल-विधिं प्रविधाय भूयः
प्रत्यक्षमेतदखिलं कृतिनो जयन्ति ।।२।।

ये स्वीय-पूर्व-जननार्जित-पुण्यसङ्घै-
र्ये वा कृपालु-यतिराज-महा-कृपातः ।
न्यक्कृत्य तूर्णमथ ये भुवि खण्डकालं
कालं महान्तमनघाः परिपूजयन्ति ।।३।।

एवं च सोऽपि विपुलं हि तपश्चिकीर्षुः
नानामुनीन्द्र-परिसेवित-सिद्ध-गेहम् ।
नाथः परं नु बहुजन्मत एव नीमा-
नन्देन सार्धमगमन्नर-जन्म-सिद्ध्यै ।।४।।

आख्या पुरेन्द्रभवनं ह्यभवत्तदीया
संस्कृत्य तामथ महीं विपुलैस्तपोभिः ।
यः कालराज्य-विजिगीषु-महातपस्वी
तां ज्ञानगङ्गधरणिं भुवि निर्ममे सः ।।५।।

आगत्य तत्र सुहृदा सह सैष भोला-
नाथो यतीश्वर-कृपानिचयैः परीतः ।
सप्ताहकालमतिवाह्य च तत्र देशे
आश्चर्यमेव निखिलं सततं ददर्श ।।६।।

कुत्राप्यसाध्यतमरोगचयात् सहेल-
मुत्पाट्य तत्र च तदीय-निदानजालम् ।
मुक्तिर्न केवलमतोऽपि तु सद्य एव
तत्कारणान्यपि विनाशमवाप्नुवन्ति ।।७।।

लोकोत्तराति-रमणीय-तमाभिरूपं
रूपञ्च तत्र हि भवेत् क्षणकार्ध-मात्रैः ।
इत्येवमादिकमसाध्यमहद्विधानं
सञ्चिन्त्यते परम-हंस-चयैस्तु तत्र ।।८।।

कुत्रापि ते परमहंसगणाः समस्ता
यन्त्रैरहो बहुविधैर्निजनिर्मितैश्च ।
आश्चर्यवस्तुनिचयं सततं तदावि-
ष्कुर्वन्ति तत्र बहुवारमहो निमेषात् ।।९।।

ये तत्र ते परमहंसचया वसन्ति
ते प्रायशोऽनुदिवसं ननु सर्व एव ।
विज्ञानयन्त्रनिचयं परिगृह्य भूयः
कालेश्वरा अपि सदा क्षपयन्ति कालम् ।।१०।।

आहार्यकार्यमपि तत्र च नास्ति तेषां
नापेक्षितश्च जगतः पवनः कथञ्चित् ।
निद्रा च नो, प्रतिकलं तु तथास्ति तेषां
विज्ञान-सिद्धि-विषया सकलाऽनुभूतिः ।।११।।

ते भैरवीसमुदया अपि योग-मार्गा-
नाश्रित्य नैजतपसाऽमित-सिद्धि-सिद्धाः ।
लोकान्तरालिगमना-गमनातिदक्षाः
स्वच्छा विशुद्धतम-चिन्मय-देहवन्तः ।।१२।।

नैजाऽखिलाऽमल-तपोविजिताऽखिलेन्द्रैः
सर्वैः समैः परमहंसयतीश्वरैस्तु ।
नो काङ्क्षितं किमपि भोज्यमथो सुषुम्णा-
नाडी-प्रभेदनत इत्यथ तद्विचित्रम् ।।१३।।

स्थित्त्वा ततः कतिपयान् दिवसान्त्स नीमा-
नन्देन योगि-मुकुटेन समं ययौ तु ।
वन्द्येन तेन करुणावरुणालयेन
पीठोत्तमस्थित-महातपसः समीपम् ।।१४।।

योगीश्वराधिप-महातपसः समीपं
नीत्वा वटू परिचयं ह्युभयोर्ददौ सः ।
स्पृष्ट्वा स्वहस्त-कमलैः शिरसी तदीये
ताभ्यां तदौ निरुपमाममितां च शक्तिम् ।।१५।।

ब्रह्माण्डतःप्रभृति यस्तपसा सलीलं
मायाण्ड-लोकमखिलं जितवान् तपस्वी ।
हस्ताब्जयुग्म-बदरीकृत-सिद्धिसङ्घः
स्पर्शैरपावयदमुं स्वकराम्बुजस्य ।।१६।।

यः पूर्वतो विहित-बीजजपोऽपि भोला-
नाथो बभूव पुनरत्र सुदीक्षितोऽथ ।
मन्ये, पुराऽमृतमहोदधि-मन्थनं तत्
कृत्त्वा तदीयमथ सारमिहैव लेभे ।।१७।।

विज्ञानसञ्चय-सरोज-दिवाकर-श्या-
मानन्दतो निखिल-योगिशिरोमणेः सः ।
विज्ञानराज्यभव-वैभवमूल-सूर्य-
विज्ञानजातमखिलं त्वरयाप्तवान् तु ।।१८।।

एवं यतीन्द्र-भृगुरामत एष योग-
शिक्षामकारणक-कार्य-विधि-प्रवीणाम् ।
जग्राह धीरमनसा सकलान् स भोला-
नाथो यथा तरणितो हि रुचिं हिमांशुः ।।१९।।

उत्तीर्य यो दश समाः स्वपरिश्रमेण
तां ब्रह्मचर्य-सरणिं मतिधीरताढ्याम् ।
विक्षोभ्यविन्दुरभवत्तु यदा स वर्णी
तत्रत्ययौवतवरैश्च परीक्षितोऽभूत् ।।२०।।

ताः सिद्धयश्च सकला निजतश्च तस्मिन्
वासेच्छयैव सहसा सततं समूषुः ।
तत्काल एव समभूत् खलु योगमार्गे
विज्ञान-वैभवगणेऽद्धुतपाटवश्रीः ।।२१।।

भूत्वा च तत्र सुपटुः खलु सर्वयोगि-
राजाधिराज इह बुद्धसमस्त-तत्त्वः ।
आजीवनं स हि कुशाग्रसुसूक्ष्मबुद्ध्या
नक्तन्दिवं विहितवान् हि गवेषणां च ।।२२।।

याः सिद्धयः समुदिता ननु तत्र नाथे
न स्वात्मने किमपि कार्यमथो हि ताभिः ।
अन्योपकार-करणाय सदैव सर्वा-
स्ताः सिद्धयोऽवनितले हि भवन्ति सिद्धे ।।२३।।

नक्षत्र-चन्द्र-रव-वायु-खरांशु-वारि-
देव-स्वरादिविषयं भुवि लुप्तकल्पम् ।
विज्ञानचक्रमखिलं स्वगुरूक्तमार्गै-
र्हस्तास्थितामलकवत्स तदा चकार ।।२४।।

एवं क्रमेण च पुनः पुनरेव सोऽयं
कृत्त्वा ततोऽधिकमिहाध्यवसायजातम् ।
आसाद्य तामपि कृपां स्वगुरोरतुल्यां
सर्वज्ञतां झटिति तामथ चाप्तवान् सः ।।२५।।

अध्यास्य भूधरमहीधर-देशमेष
कालं महान्तमपि यो गमयाञ्चकार ।
शीतातप-प्रभृति-कष्टचयं स सोढ्वा
सद्ब्राह्मणोद्भवमसौ कलयाञ्चकार ।।२६।।

अभ्यासतो विकट-हिंस्र-पशु-व्रजेषु
नक्तन्दिवं भयमयेषु च काननेषु ।
कुत्राप्यथो स ससतीर्थ्यचयः कदाचित्
कुत्रापि तद्रहित एव उवास भूयः ।।२७।।

लोकालयस्य निकटे वसतौ हि सत्यां
भिक्षार्थमस्य च गुरोरभवत्त्वनुज्ञा ।
एवंक्रमोऽभवदहो भुवि भोजनाय
तत्रापि याचनविधिः स निषिद्ध आसीत् ।।२८।।

गत्वा कथञ्चिदपि हन्त च सद्गृहस्थ-
द्वारं प्रदर्श्य किल तत्र च भैक्ष्यपात्रम् ।
लब्धं ततो यदि निजाय तु किञ्चिदेव
कार्यो हि तोष इह तेन नतेन तत्र ।।२९।।

लब्धं भवेद्यदि च नो तदनन्तरं तु
गच्छेद् गृहान्तर-कपाटयुगं च भूयः ।
एवं-क्रमेण च गृहत्रयमेत्य पश्चाद्
नैव स्वतस्तदनु किञ्चिदपि प्रकल्प्यम् ।।३०।।

आसीत्कदाचिदपि यो गिरिनारदेशे
घस्रत्रयं निरशनं सहसा जगाम ।
लोकालयोऽपि किल दूरत एव सासीत्
स्वीयेष्टमन्त्रजपमत्र विधाय सुप्तः ।।३१।।

तन्द्रोत्थितः सपदि मृन्मय-पात्रसङ्घे
सद्यो ददर्श विपुलं वरमिष्टमिष्टम् ।
क्षीरं फलं चिपिटकं मधु शुद्धपेय-
मत्यन्तपक्व-सहकार-फलादिकानि ।।३२।।

दृष्ट्वा तदद्भुत-विचित्र-सुभोज्यवस्तु-
जातं च दिव्यविधिना विधिना कृतं च ।
मातुः कृपेत्यविरतं स तु मन्यमानः
क्लिन्ने तदीयनयने विमलाश्रुभिस्ते ।।३३।।

एवं बहुत्र बहुधाऽतिविचित्ररीत्या
ब्रह्माण्डभाण्डजननी स्वसुतं ररक्ष ।
आजन्म-शास्त्र-पदवीपथिकस्य तस्य
मात्रङ्कपालितशिशोर्नु भयं कुतःस्यात् ?।।३४।।

स ब्रह्मचर्यनियमान् बहुकाल-साध्या-
नुत्तीर्य नैजतपसा महितेन तेन ।
भूत्वोर्ध्वबिन्दुरनघो गुरुवाक्यवश्यः
काषायवस्त्रमधरद् निजयुक्तरूपम् ।।३५।।

तस्मात् परं मठविधीननुसृत्य नाथो
दण्डी बभूव परिहीनसमस्तमोहः ।
स्वीयव्रतं सपदि वर्षचतुष्टये च
तूर्णं समापयदसौ स्वगुरूपदेशात् ।।३६।।

उत्तीर्य तामपि दशामनु सोऽपि भूयो
विन्यस्य दण्डमथ तत्परसिद्धिलिप्सुः ।
सन्न्यासमेव जगृहे नियमानुसारं
तावन्तमेव समयं क्षपयाञ्चकार ।।३७।।

वर्षाष्टकेषु बहु-भारत-तीर्थ-जातं
बभ्राम लोक-विषयं बुबुधे महान्तम् ।
सर्वत्र संयमरतो निजबोध-रूपः
त्यागी जितेन्द्रियगणोऽखिलतत्त्व-बोद्धा ।।३८।।

काले तदा स तपसा प्रचुरेण लेभे
योगोदितान् बहुविधीन् बहुजन्मसाध्यान् ।
एतेषु सर्वविध-सिद्धिनिदानपात्र-
मुल्लेख्यमर्हति च नाभि-किरात-धौतम् ।।३९।।

एतद् द्वयं बहु-सुदुष्कर-योगलभ्य-
मात्मस्थितैर्दुरधिगम्यमहो यमीन्द्रैः ।
आजन्म भूम-तपसाऽमलमानसानां
यद् योगिनामपि सुदुष्करमेव भाति ।।४०।।

कृत्त्वा समस्तजनिमेव महातपस्यां
यद् योगिभिर्नहि कदाऽपि तु लभ्यतेऽत्र ।
दृष्ट्वा क्रियासु सुरतिं किल तादृशीषु
नाथस्य हास्यमभवत्प्रथमं हि तत्र ।।४१।।

कश्चिद् यतिस्तमवदद्धि विधाय हास्यं
'रे तुच्छ! तापसशिशो! किमिह ब्रवीषि ?
अस्माभिरत्र शतवर्षभवैस्तपोभि-
र्लब्धं न यत्कथमथ त्वयि तद्विभातु ।।४२।।

कृत्वा पुनर्बहु-कठोर-परिश्रमौघं
लब्धं न कैश्चिदपि वर्षशताद्विशिष्टैः ।
कृत्ये तु तत्र महिते तव यादृशीच्छा
सा तादृशी विधुमतेरिव वामनस्य' ।।४३।।

श्रुत्वा तदीरितगिरः स उवाच वाच-
'मुक्तं यदत्र भवता ननु सत्यमेव ।
किन्त्वत्र तादृश-सुशक्तिमतो गुरोर्मेऽ-
साध्यं न किञ्चिदपि भो भृगुरामसूरेः' ।।४४।।

पश्चात्स तेन च पुनः पुनरेव भोला-
नाथस्तदोपहसितो हि बभूव सद्यः ।
काले तदेव गगनाऽयनतः समर्थ
एतत्पदं च भृगुरामयतिः प्रपेदे ।।४५।।

आगत्य यो यतिजनोचित-शुद्धकोपं
धृत्वा च तं यतिवरं धुरि ताडयित्वा ।
तस्मै ददावपि च नाभिकिरातधौती
यस्मिन् भवेद् गुरुकृपा किमु तस्य चिन्ता ?।।४६।।

अभ्यस्य सोऽपि सकलानपि तद्विधींश्च
स्वल्पेन चापि समयेन च तस्य तस्य ।
लब्ध्वा च सिद्धिनिचयं सुमतिर्मनस्वी
सर्वत्र योगविषये पटुतामवाप ।।४७।।

श्रीमातृपादकमलभ्रमरायमाणो
नाथो महीतल-परिभ्रमण-प्रसङ्गे ।
आगत्य वण्डुलभुवं स यदा कदाचिन्
मातुश्चकार खलु पुण्यद-दर्शनं तत् ।।४८।।

बाल्ये कदाचिदपि तज्जननी प्रबुद्धा
मुद्रा ददौ कतिपया प्रयता हि कस्मै ।
नाथस्तु वृत्तमखिलं तदनु प्रबुध्य
सोवाच सादरमिदं वचनं तदानीम् ।।४९।।

"मातः कथं वद धनानि बहूनि तस्मै
दत्तानि नायमपि यः प्रतिदातुमीशः ?'
माता जगाद 'शृणु बालक मामकीन!
दास्यत्ययं तु समयेऽस्य समागते तु' ।।५०।।

मुद्राभिराभिरभवन्महदस्य कार्यं
जातेऽखिले खलु धनं प्रतिदत्तमेव ।
आहूय पुत्रमथ सा कथयाम्बभूव
रे पुत्र पश्य तव वित्तचयं पुरस्थम् ।।५१।।

सर्वं विलोक्य हृदये सहसोदियाय
नाथस्य तस्य च निजं प्रति हीनभावः ।
हा हन्त, हन्त, जननी मयका नु वाच्या
हाऽहङ्कृतिर्धनकृते च ममाविरासीत् !!५२।।

आत्मानमेव बहुवारमसौ सितात्मा
धिक्कृत्य, चापि न करोमि पुनर्विचिन्त्य ।
गत्वाऽथ पूज्य-जननी-परिपूतदेशं
स्पृष्ट्वा तदङ्घ्रिकमलं कथयाञ्चकार ।।५३।।

मातः! क्षमस्व च हृदा त्वपराधजातं
मोहान्मया यदुदितं खलु मामकीनम् ।
एवं भविष्यति भविष्यति नो कदाचित्
पुत्रः खलो भवतु, नैव भवेत्कुमाता ।।५४।।

श्रुत्वा तदीरितगिरो विमलास्तदानीं
स्नेहाश्रुपूर्णनयनाऽकथयच्च वाचम् ।
'चान्द्रायणं चर शिशो मम पूतचित्त
तेनैव ते निखिलदुष्कृततो हि मोक्षः' ।।५५।।

कृत्वा तदुक्तवचनानुगतं व्रतं स
आम्नाय-सिद्ध-नियमाननुसृत्य नाथः ।
मातुस्तथा वचन-लङ्घनजं समस्तं
प्राक्षालयच्छुभमतिस्तरसा स्वपापम् ।।५६।।

इत्थं यो जननीप्रसादमहितो बाल्ये बभूवादराद्
यश्चायं शिशुतादशासु शिवलिङ्गे देवतामाप्तवान् ।
यस्यैवास्य तु वाक्यमात्रपरवान् भोगी शिवस्याभवत्
तस्य श्रीगुरुपादपूर्ण-कृपया जग्मुः करं सिद्धयः ।।५७।।

लब्ध्वा सिद्धिततीर्विजित्य विधिसृष्टाँश्चैव लोकांस्तथा
सृष्ट्वा चापि ततोऽधिकानपि बहून् लोकव्रजान् शाश्वतम् ।
दीर्घां कालनदीं निजेन तपसा यस्तर्तुकामोऽचिरात्
तत्रत्याखिलयोगिदेशिकचयानामेष मान्योऽभवत् ।।५८।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषव्रतः ।
एष श्रीमनुदेवपण्डितकविस्तस्य प्रबन्धेऽधुना
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽत्र षष्ठोऽगमत् ।।५९।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतश्रीमनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये षष्ठः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## सप्तमः सर्गः

अस्ति स्वस्तिपरैर्यतीन्द्रमणिभिर्विज्ञानयोगेश्वरै-
रादित्याऽऽमृत-देव-शीतकर-वायु-ध्वान-वैज्ञानिकैः।
ब्रह्माऽऽविष्कृतसर्वलोकनिवहाञ्जित्वापि काष्ठाम्बरैः
शास्त्रक्षीरधिमन्थनाढ्यहृदयैर्धीज्ञानतत्त्वोत्सवैः ।।१।।

पूर्णाभ्यस्तनिशाक्रियोदितमहासिद्ध्याप्तदिव्यालयैः
पुण्याम्भोधिनिरन्तरस्नपनसच्चित्तत्त्वद्विग्रहैः।
आलक्ताक्तशिवापदाम्बुजरजोभृङ्गायमाणैरहो
विद्योद्योतितदिङ्मुखैः परमहंसाधीश्वरैर्मण्डितः ।।२।।

विज्ञानक्रमसिद्धसिद्धिनिरतैर्योगे प्रभूतश्रमै-
र्जन्म स्वं धुरि मानुषं सफलयद्भिर्योगशिक्षार्थिभिः।
नानायोगमहातपःश्रमरताभिर्भैरवीभिस्तथा
सिद्धौघैर्निजवाक्तिरस्कृतसुरैश्श्रीज्ञानगञ्जाश्रमः ।। ३।।

तत्रास्त्येवमथर्वणाञ्च यजुषां साम्नां तथर्चामहो
सत्तत्त्वामृतयूषपिण्डमथनप्रोद्भूतसाराम्बुधिः ।
लब्ध्वादौ गुरुतः प्रसादममलं पश्चात् कुशाग्रीयया
बुद्ध्याऽनुष्ठितसाधनाढ्यहृदयैस्तस्यामृतं पीयते ।। ४।।

विज्ञानानि महान्ति सद्धिषणया सत्स्वामिभिः शिक्ष्यतेऽ-
प्यद्वैतं पदमाश्रितैः परमतो योगोऽप्यथो गम्यते ।
इच्छाशक्तिमिमां विधाय विवशां मात्रे समर्प्यापि तां
पूर्णाहन्त्वमवाप्य यान्ति च चिदानन्दात्मकं स्वं पदम् ।।५।।

विज्ञानानि च सन्ति सन्ति शतधा श्रीज्ञानगङ्गाश्रमे
तानि प्राकृतिकानि, तेषु रविविज्ञानं शिरोभूषणम् ।
स्वायत्ते सति सन्ततं मिहिरविज्ञाने क्रियायोगतः
सर्वाण्येव मतानि तानि नितरां वश्यान्यवश्यं ततः ।।६।।

श्रद्धाराद्धगुरुः क्रियोदितविधिं कृत्वा क्रियात् साधनां
वश्यं तद् बहुकालिकैर्मिहिरविज्ञानं तपस्सञ्चयैः ।
वश्यास्स्युस्सकलास्ततस्स्वतपसा विज्ञानधीराजयः
किं स्यादन्यपदातिभिर्बलवता सेनापतौ वा जिते ।।७।।

एता भान्ति पृथक् पृथक् सरणयश्श्रीयोगविज्ञानयो-
राविष्कारविधिस्तथैव नितरामेतद्द्वयाद्वस्तुनः ।
सिद्धिश्चापि पृथक्, तथैव परिपाटी साधनायाः पृथग्
भेदं चैतमजानतां नहि भवेज्ज्ञानं द्वयोर्मार्गयोः ।।८।।

पूर्णः श्रीभगवान् स्वयं हि सकलोऽस्त्यूर्ध्वं ततो निष्कल-
स्तस्य श्रीपरमस्वरूपमुदितं सन्मात्रमेवास्ति यत् ।
भूयस्तत्र मतं स्वरूपयुगलं, यच्चान्तरङ्गं तयोः
शक्ती द्वे किल तस्य, यच्च बहिरङ्गं तस्य शक्तिद्वयम् ।।९।।

अद्वैतं परमस्वरूपमुदितं पूर्णं सदेकं मतं
यत्तन्मध्यममीरितं तदु चिदानन्दात्मकं तद् ध्रुवम् ।
आद्यं तत्र तु चिन्मयं खलु तयोरप्यन्तरङ्गं भवे-
दानन्दोऽन्यतरस्तु तस्य बहिरङ्गं योगिभिस्स्वीकृतम् ।।१०।।

रूपं तस्य तु मध्यमं यदुदितं यच्चान्तरङ्गाभिधं
तद् वा युग्मविधिं गतं तदुभयोराभ्यन्तरं तत्तु चित्।
यच्चाभ्यन्तरमुन्मुखं भवति सा पूर्णा हि शक्तिर्यतः
सृष्टावुन्मुखमेतदेवमपरं चानन्दरूपं बहिः ।।११।।

सृष्टेर्बीजमिदं श्रुतावभिहितं यस्मात् समूलं जगत्
तस्यास्संस्फुरणं ततश्च बहिरङ्गे स्यात् स्वरूपे स्थितिः।
एतत् तत्त्वमयस्वरूपसरणिं भित्त्वा बहिश्चागतो
भूयात्तत्परमेव तत्त्वसमुदायानां प्रकाशो महान् ।।१२।।

यस्मात्तत्पर एव सर्वजगतां नूनं प्रकाशो यथाऽ-
प्येतस्माद् भुवनान्यतः परमथ स्याद् विश्वसृष्टिः समा।
या सृष्टिर्विपुलीभवेद्विकसिता, तत् कालराज्यं स्मृतं
तत्पूर्वं मनसामगोचरगतिर्देवो महाकालराट् ।।१३।।

अव्यक्तं हि ततोऽपि पूर्वमखिलं नूनं तदाभासकं
ज्ञातव्यं कलनात्मकं खलु भवेच्छक्तिक्रियोन्मेषतः।
उन्मेषेण सहैव यद् भवति तत् खण्डस्य कालस्य तत्
प्रोक्तं सर्वरहस्यजालमखिलं तत्त्वान्यतिक्रम्य यत् ।।१४।।

रूपं यद् बहिरङ्गकं भगवतः शक्तित्रयालिङ्गितं
सेच्छा ज्ञानमथ क्रिया द्रुतमनुस्यूतन्नमुस्मिन्नहो।
एतासां तिसृभिश्च पञ्चभिरथो वा पूर्वसत्ता तु या
लब्धुं जन्मशतार्जितैर्निरुपमैः पुण्यैर्बुधैः शक्यते ।।१५।।

इच्छालिङ्गितविग्रहो ध्रुवमसौ योगो मतो योगिभिः
शक्त्योर्यश्च समन्वयोऽत्र फलितो ज्ञानक्रियायुग्मयोः।
सर्वत्रायमहो रहस्यभरितो विज्ञाननामा निधि-
र्ज्ञानाच्छ्रेष्ठतरा, क्रिया लघुतमा स्याज्ज्ञानविज्ञानयोः ।।१६।।

एतद्युग्मसमन्वयेन यदिदम्प्रादुर्भवेद्, देशिकै-
र्विज्ञानं कथितञ्च तद्बहुविधं सूर्यादिभेदान्मतम्।
वेत्तुं ज्ञानवशात्तु शक्यमखिलं, कर्तुं न तत्पार्यते
कर्तुं च क्रियया हि शक्यमखिलं ज्ञातुं न तच्छक्यते ।।१७।।

तस्मात् सिद्धमिदं समन्वयवशात् प्राप्तं द्वयोर्मार्गयो-
र्विज्ञानं समुदेति यत्र निखिलं, तत्रैव कार्यं भवेत् ।
इच्छा मूलत एव यत्र हि भवेन्नो तत्र शक्ति स्फुरेद्
न ज्ञानक्रिययोः पृथक् स्थितिरथेच्छा सैव योगे मता।।१८।।

विज्ञानोदितसृष्टितः प्रकृतितस्त्वाकृष्य तत्कारणं
विज्ञाय प्रकृतिस्थितं सकलवस्तूनां हि सम्यक्तया।
श्रीमद्भास्कररश्मिभिः सपदि चापि ज्ञानशक्त्याऽखिलं
स्रष्टाऽयं क्रमशोऽभिरामविधिना शक्त्या क्रियायाः पुनः।।१९।।

अत्रैकं हि रहस्यजालममलं ज्ञेयं महाधीधनै-
र्विज्ञानोदितसृष्टिकार्यकरणे सृष्टं भवेद् वस्तु यत्।
द्रष्टव्यः परमाणुरर्कघृणिषु प्रज्ञानपारङ्गतैः
सन्त्येवात्र सदा पदार्थसकलोपादानजातान्यहो ।।२०।।

सृष्टिस्तु प्रकृतेर्भवत्यपि समोपादानजातं तथा
श्रीमद्भास्कररश्मिभिः प्रकृतितः सर्वं स्थितं ज्ञायते ।
तच्चाऽऽकृष्य 'विशुद्ध'सत्त्वफलके तत्स्थापयित्वा क्षणा-
नन्यच्च क्रमशस्तथैव च गृहीत्वाऽऽविष्क्रियाद् वस्तु यत् ।।२१।।

एतस्मिन् पटुता भवेद् यदि तु विज्ञाने हि सौरात्मके
नैपुण्यं स्वत एव तत् समुदियाद् भिन्ने प्रभिन्ने पुनः।
नक्षत्रेश्वर-सर्वतोमुख-नभस्वद्-ध्वान-वृन्दारके
विज्ञाने ननु 'रश्मिबोधनचणा धीः' कारणं स्याद् यतः ।।२२।।

नो वर्णस्तु यथैव तिष्ठति कदाचिच्छ्वेतवर्णं विना
यद्वच्चाक्षरसञ्चया अपि भवेयुर्नो अकारं विना ।
शक्तिञ्चापि विना यथा नहि भवेच्छम्भुः कदाचित् क्वचिद्
नैवं तच्च 'विशुद्धसत्त्व'ममलं स्यात् सौरसृष्टिर्विना ।।२३।।

ज्ञात्वा भास्कररश्मितस्तु सकलं स्वज्ञानशक्त्या पुरा
भूयस्तत् क्रमशो 'विशुद्धफलके' कृत्वा क्रियाशक्तिभिः।
अन्त्यो वर्णमयो यदा भवति यस्तास्मिंस्तु रश्मिस्तदा
'स्फोटः' स्यात्तु यथाऽन्त्यवर्णसमभिव्यङ्ग्यः पदार्थस्तथा ।।२४।।

रश्मावन्त्य उपागते प्रकटिते स्वेष्टे पदार्थे ततो
भाण्डारं प्रकृतेर्यतोऽमिततमं विश्रान्तिरेवास्ति नो ।
तस्मादन्त्यघृणिर्यदा प्रकटितो जातः पदार्थो यदा
कर्तव्यस्तु तदैव योगनिरतैस्तत्रावरोधो घृणेः ।।२५।।

अर्थोऽस्मात् स्फुटतीति यो निगदित स्फोटो महाशाब्दिकैः
संस्काराः किल पूर्ववर्णजनितास्तिष्ठन्ति, चाऽर्थोऽन्त्यतः।
तद्वच्च प्रकृतेऽपि पूर्वघृणिभिः सत्त्वे त्वकारे पुनः
तिष्ठद्भिः परिपूरितैस्तदनु तैर्व्यक्तः पदार्थो भवेत् ।।२६।।

पूर्णोऽसौ भगवान् सदा निजगुणैस्सङ्कीर्णता जीवता
जीवत्वं परिहेयमेव, बहवः प्रोक्ताः क्रमा धीधनैः।
तस्माद् यः प्रकृतिं विजित्य तपसा, तत्स्वामितामाप्नुयात्
तत् स्वामित्वमुदीरितं मतिधनैर्यद् द्वैतभावास्पदम् ।।२७।।

स्वामी तु प्रकृतिं विजित्य तपसा तूर्णं गृहीत्वाऽथ ता-
मिच्छालिङ्गित एव यस्तु कुरुते ज्ञानक्रियाकर्मणी ।
ज्ञात्वा कार्यविधौ क्रमञ्च सकलोपादानरूपं सदा
ज्ञानेन क्रियया प्रकाश्य मिलनाद् द्रव्यं समाविष्क्रियात् ।।२८।।

सम्पूर्णं सततं स्थितं प्रकृतिषूपादानजातं क्रमात्
कार्याणां रविरश्मिभिर्धुरि निजेष्टानाञ्च केषामपि ।
ज्ञात्वा तत्र विशुद्धसत्त्वफलके स्याज्ज्ञानशक्त्या तया
पश्चाच्च प्रकटीविधाय सकलं मूलं क्रियाशक्तिभिः ।।२९।।

द्रव्यं स्वेप्सितमेव तेन विधिना ह्याविष्क्रियात् संयमी
विज्ञानप्रभवाऽस्ति सृष्टिरियमेतत्प्रक्रियाभिर्भवेत् ।
स्वामी यः प्रकरोति तत्र नहि चेच्छाशक्तिरस्मिन् क्रमे
ज्ञानेन क्रियया भवत्यथ युतश्शक्तिस्तयोरस्मिता।।३०।।

यत्रैषा प्रकृतिस्स्वयं परवशा सीमन्तिनीवेच्छया
सर्वं भास्कररश्मिभिः प्रकटिता विज्ञानसृष्टिस्तु सा ।
सृष्टिर्योगिभवा तु सा निगदिता ज्ञानक्रियाशक्तितो
नापेक्षाऽस्ति, यतः स्वयं भवतु सोऽद्वैती तु योगी तदा ।।३१।।

अद्वैतास्पदमेव तद्भवति तीर्थस्वाम्यवस्थोत्तरं
विज्ञानात्तु परं पदं निगदितं मोघेतरेच्छात्मकम् ।
ज्ञात्वाऽभ्यस्य च यद्विधिं तदनु यो योगी स योगाद् भवे-
दिच्छाशक्तिरियं मता, प्रकृतितो नो किञ्चनापेक्ष्यते ।।३२।।

भेदो न प्रकृतेर्भवेत् पुरुषतः, स्वस्वामिभावो गतो
योगी सोऽभवदेषकस्तदनु चेच्छाशक्तिमान् पूर्णधीः ।
इच्छा स्यात्तु यदा तदैव झटिति प्रादुर्भवेद् वस्तु यत्
स्वान्तर्भुक्तपदार्थजातममलं स्वीयेच्छयाऽऽविर्भवेत् ।।३३।।

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
श्रीमच्छङ्करदेशिकेन्द्रगदितं वाक्यं तपस्यास्पदम् ।
तत्त्वद्वैतपदे स्थितिं विदधतामिच्छैकमध्वात्मनां
सञ्जित्य प्रकृतिं तदात्तविषयाद् मुक्तात्मनां सिद्ध्यति ।।३४।।

तस्मात् सिद्धमिदं सदा जगदिदं सर्वं हि सर्वात्मकं
स्याद्वादः परमाणुवाद इति वा सद्वाद एषोऽन्यथा ।
एतत् स्वीयमतं विधृत्य वदतामापेक्षिकं भासते
सर्वं मातृपदाम्बुजे स्वहृदये लग्ने न किञ्चित्करम् ।।३५।।

विज्ञानोदितसृष्टिकर्मकरणेऽवश्यं भवेद् न्यूनता
स्वेच्छायाः करणाद् भवत्यथ कुमारीपूजनात् तद्भृतिः।
इच्छासृष्टिविधौ स्वरूपविषयाद् हानिस्तु या जायते
सम्पूर्तिस्तु समस्तयोगकलया कार्या निजस्य क्षतेः।।३६।।

इच्छाशक्तिवशादहो यतिवराः सर्वं विधातुं क्षमाः
सैषा भाति तु शक्तितत्त्वविषयाऽभिन्ना महाशक्तितः।
तत्पश्चाद्विहिते समर्पणविधौ स्वेच्छा महेच्छां गता
भारो नैव तदा निजोपरि भवेदिच्छापि मातुर्मता ।।३७।।

इच्छेयं नहि योगिनस्तदनु यस्या अर्पणं चाभवत्
स्वातन्त्र्यं समुदीरितं ननु जगन्मातुस्तु खेलाऽथवा ।
ज्ञानेन क्रिययेच्छया भवति यत्तद् बाह्यरूपं भवे-
दुत्तीर्यापि तदन्तरङ्गक-चिदानन्दात्मकं चाश्रयेत् ।।३८।।

इच्छायास्तु समर्पणं यदुदितं तस्याः कृते योगिना-
मालक्ताक्तमहाजपारुचिरुचिश्रीमातुरङ्घ्रिद्वये ।
एतच्छ्रेष्ठतमं नहि प्रकृतिजं बाह्यं, तु नैजं महत्
कृत्वैतत्त्ववशिष्यते किमपि नो कर्तव्यकर्तृत्वयोः ।।३९।।

अद्वैतं हि पदं समीरितमहो तत्रापि भावो भवेद्
'नाथाहं तव सैन्धवः किल तरङ्गोऽयं यथा' तत्समः।
भक्तीभूय प्रकाशमृच्छति च योगी तन्ममत्त्वं गतं
'सर्वं मातृवशं' विभाति धिषणा निश्चिन्ततां यात्यसौ।।४०।।

शिष्टा तत्र हि केवला किल विशुद्धाऽहङ्कृतिः साश्रिता
पश्चात् सापि लयं प्रयाति, तदहम्भावस्तपस्याहतः।
नूनं भाति सदैव योगिषु विशालाहङ्कृतिः पूरिता
पूर्णाहन्त्वमदोऽमदैर्निगदितं पूर्णाद्वितीयं हि तत् ।।४१।।

शिक्षायाश्चरमं हि लक्ष्यमिदमस्ति ज्ञानगङ्गावने:
कृत्वा सिद्धिततीर्निजस्य किल वश्यास्साधनारत्नतः।
भोलानाथयतीश्वरस्य तु तदा जाता स्थितिः शाश्वती
श्रीमन्मातृपदाम्बुजद्वयभरे भृङ्गायमाणाऽनिशम् ।।४२।।

मातृक्रोडसुधाम्बुधौ निरुपमे लब्धे तपस्सञ्चयैः
तत्रैवानुदिनं त्वसावुपगतो बाल्यं हि चिक्रीड सः।
विस्मर्तव्यमिदं न जातु भगवद्वाक्यन्तु गीतोदितं
योगक्षेमयुगं तदीयमखिलं देवी ह्युवाह स्वयम् ।।४३।।

इत्थं स्वात्मसमर्पणं यतिपतिर्देव्यास्तु पादाब्जयोः
कृत्वाऽभूत् कृतकृत्य एष च ततो जातोऽस्य भाग्योदयः।
सम्प्राप्तुं धुरि चात्वराभिधमहायोगं सदा दुर्लभं
दीक्षां श्रीभृगुरामयोगिनृपतेर्दीपो व दीपाद् द्युतिम् ।।४४।।

मत्त्वाऽस्मिन्नपि बाल एव नितरामभ्यासदाक्षीमहो
दृष्ट्वा तत्र तदर्हतामुपहसन्तं ताडयित्वा यतिम् ।
यल्लभ्यं न सहस्रवत्सरतपोज्येष्ठैस्तु योगीश्वरैः
पूर्णं तूर्णमुपाजहार, गुणिनोऽवस्थादि नापेक्ष्यते ।।४५।।

आदौ श्रीगुरुतस्त्वधीत्य विधिना श्रीनाभिधौतिक्रियां
सम्प्रक्षाल्य पुनः पुनश्च पयसा शुद्धेन नाभिं निजाम् ।
तद्ग्रन्थीः परिधूय नाभिकमलं दिक्सङ्ख्यपत्रोज्ज्वलं
सद्यो ज्ञानदिवाकरद्युतिचयैर्यो बोधयामास तत् ।।४६।।

इत्थं तत्र स नाभिधौतिपदवीमभ्यस्य भूयो यमी
तस्याः पक्वदशामसावधिगतो धौतिं किराताह्वयाम् ।
लेभे, तत्र च पाटवे त्वधिगते स्याद् व्योममार्गे गति-
र्जाता तस्य, तदाऽस्त्यपेक्षितमहो न स्वेन्द्रियाणां बलम् ।।४७।।

अभ्यासेन किरातधौतिसरणेर्देहो हि शून्यो भवेत्
तत्सङ्कोचनसम्प्रसारणविधावायाति शक्तिर्ध्रुवम् ।
लोमच्छिद्रसृतेर्भवेदतिबृहद्वस्तुप्रवेशो मुदाऽ-
प्यष्टैश्वर्यगणास्स्वयं किल निवासाय व्रजन्त्यादरात् ।।४८।।

शुद्धीकृत्य किरातधौतिविधिना वायुं निजाङ्गे भरेद्
बोद्धव्यं हि किरातकुम्भकमहो एतद्बलाद् योगिनः।
उत्थायाऽपि च पुष्करे नहि भवेद् वाक्यप्रयोगे क्षति-
र्बाह्यज्ञानमथास्य भाति सततं, सर्वत्र सिद्ध्येद् गतिः।।४९।।

अभ्यासे ननु योगिनामथ भवेत्तापो महान् वर्ष्मसु
तच्छान्त्यै स्फटिकोपलानि च तनौ संस्थापनीयान्यहो ।
एतत् सिद्ध्यति नैव कुम्भककिराताभ्याससिद्धिं विना
श्रेयांस्तत्र तु कुम्भकादपि किराताभ्यासविद्याविधिः।।५०।।

अज्ञानाढ्यदशासु हा विशति यो जीवस्तु मोहाविलः
सुप्ता हन्त गतक्रिया भवति सा चैतन्यशक्तिस्तदा ।
सेयं कुण्डलिनी ध्रुवं त्रिवलयाकाराढ्यसावेष्टना
मूलाधारचतुष्कपत्रसुभगा या जीवशब्दाभिधा ।।५१।।

पश्चात् सद्गुरुपादपद्मकरुणां सम्प्राप्य मोघेतरां
यो जीवत्वविनाशनाय शनकैश्शास्त्रोक्तसद्वर्त्मना।
सद्बिन्दुः क्रमशो व्रजत्युपरितोऽप्याधारपङ्केशयाद्
भित्वा चक्रचयान्, मनोहरसहस्त्रारं महेशालयम् ।।५२।।

सुप्तस्तत्र तु शक्तिहीनगिरिशो, गत्वा तु सा तत्पदं
सैकीभूय च शम्भुना, विदधती तं जागरूकं शिवम्।
सञ्जातं किल तत्र यत्तदुभयोस्सत्सामरस्यं महत्
सम्पीयाऽमृतमेव निस्सृतमहो जीवो हि धन्यास्पदम् ।।५३।।

जीवत्वं परिधूय, तत्परमहो लब्ध्वा शिवत्वं शिवं
शिष्टं तस्य तथापि तत्परशिवत्वं सत्स्वरूपास्पदम्।
स्याद् यत्रोर्ध्वगतिस्तयोश्च शिवयोर्नूनं सहस्रारतो
यत्पश्चादथ सम्भवेत् परशिवत्वं तत्त्वनूर्ध्वं ध्रुवम् ।।५४।।

उत्थानादपि पूर्वमेव विगता या जीवताऽसौ ततो
नूनं स्यात् परमात्मनि स्थितिरहो सा दुर्लभा शाश्वती।
आगत्यात्र तथापि नैव हि महाशून्यस्य भेदो भवेद्
नाऽभित्त्वा समुदेति तत्परशिवत्वं न स्वतन्त्रं महः ।।५५।।

लाभो नोर्ध्वगतेः कथञ्चिदपि वा श्रीनाभिधौतिं विना
मध्याकर्षणविक्रिया लयमिताऽस्यां नाभिधौत्यां ध्रुवम्।
ऊर्ध्वाकर्षणमेव तत्र हि सदाऽभिव्यक्तिमीयात् स्वतो
शाक्ताण्डादिसमस्तभाण्डकुहरे स्वेच्छागती राजति ।।५६।।

सोऽयं 'चात्वरयोगराज' उदितः सर्वार्थकृत्सर्वथा
याथार्थ्येन हि 'खेचरी'गतिरियं प्रोक्ता महायोगिभिः।
एतत्सर्वमहो गुरूक्तविधिना विज्ञाय, कृत्वा तथा
सारूढश्च तदोन्नतेर्हि चरमं सत्त्वं ततः सत्त्वरम् ।।५७।।

इति निगदितमेतद् योगविज्ञानसौधं
निरुपमगुरुगोपीनाथपद्मप्रसूतम् ।
अथ परशिखरं सम्प्राप्य सिद्धेर्यतीन्द्रः
समधिगतमहाऽऽनन्दाम्बुधौ यश्चिखेल ।।५८।।

जगति गतिमतां यो ग्रामणीर्ग्रामराजी-
मसकृदथ समेत्य स्वां प्रसूं वन्दितुं सः।
रहसि च पितरं स्वं भ्रातृवाक्यानुरोधाद्
मृतमपि तरसा चाऽदर्शयत्स्वैस्तपोभिः ।।५९।।

भूयः पृथ्वीमण्डलं पर्यटन्त्स गेहं गत्वा मातरं स्तोतुकामः।
चक्रे लीलामग्रजोक्तानुरोधात्सर्वं श्राव्यं वक्ष्यमाणेऽत्र सर्गे।।६०।।

अत्र श्रीकविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्कारुण्यतारुण्यतः।
सर्गश्श्रीमनुदेवनिर्धनकवेश्श्रीयोगविज्ञानधी-
वर्ण्याढ्यस्तु विशुद्धवैभवमहाकाव्येऽभवत्सप्तमः।।६१।।

श्रीचैतन्यमहाप्रभूक्तिकृपया यौ भक्तिशास्त्राण्यलं
गोत्रायां स्वधिया प्रकट्यकुरुतां सर्वस्वभूतान्यहो।
तौ श्रीरूपसनातनाख्यविबुधौ, ज्येष्ठस्तु हंसस्तयो-
स्तद्वंश्यो मनुदेव एष हि मुदा सर्गं व्यधत्तादरात् ।।६२।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यात्मजमनुदेव-*
*भट्टाचार्यकृतविशुद्धवैभवमहाकाव्यघटकीभूत-*
*सर्गाणां सप्तमः समाप्तः।।*



# विशुद्धवैभवं महाकाव्यम्

## अष्टमः सर्गः

प्रसिद्ध-सिंद्ध-भूमीनां नूत्न-रत्नमिहास्ति या ।
आविष्कृता तपस्याभिर्योगिना विधिना न हि ।।१।।

न्यक्कृताऽऽदित्य-विभवा रहस्य-निलयाऽलया ।
महायोगि-पादपद्मरेणु-पुञ्जितदिङ्-मुखा ।।२।।

गतश्यामाऽपि सश्यामा निर्भयाऽपि भयाऽन्विता ।
अदिष्टाऽपि सदिष्टा या सवया अवया अपि ।।३।।

शास्त्र-तत्त्व-रत्न-रत्नाकर-मन्थन-मन्दरा ।
भाति लोक-चक्रवाले ज्ञानगङ्गाश्रमावनिः ।।४।।

सन्ति यद्यपि सर्वत्र सर्वास्ताः सिद्धभूमयः ।
भूमिरेषा तु सिद्धाऽपि सिद्धसाधक-भूरपि ।।५।।

सदया सर्वभक्तेषु तिरस्कृत-भवामया ।
निर्भया च गुणैर्नैजैरलया या कदाप्यहो ।।६।।

यत्र सिद्धिचयास्ते ते स्वयं सन्ति कृतालयाः ।
अजेया च देवराजैरमेया च गुणैरहो ।।७।।

यत्कीर्तयः सदा गेया अपेया कालजिह्वया ।
कृत-कृत्यास्तूर्णमेते येषामेषा मताऽवनिः ।।८।।

विरिञ्चि-प्रपञ्च-मञ्च-सञ्चारवञ्चिताञ्चलाः ।
अचलाञ्चलमञ्चन्तु वञ्चनाचुञ्चुचञ्चलाः ।।९।।

विश्वविश्वकटाहस्य कल्याणं कर्तुमीहते ।
यदि कश्चिद्, मर्त्य एव तत्रत्यं मतमीरितम् ।।१०।।

जगत्यां साधका ये ये सन्ति साधनसंरताः ।
ते निजाभीष्टसिद्ध्यर्थं पर्याप्ता इति निश्चयः ।।११।।

तेन नूनं भवेद् भव्यं भव्यं नेति मतं मतम् ।
यदि स्यात्तल्लघुतरं तेन किञ्चिन्न सिद्ध्यति ।।१२।।

आरोह-मार्गमाश्रित्य यत्नतो यतितां ययुः ।
समस्तजगतां क्षेमं कर्त्तुं नेशा इति स्थितिः ।।१३।।

ऊर्ध्वस्तरं तु ते लब्ध्वा तत्र गन्तुं समुत्सुकान् ।
स्वभक्तान् साधनाधन्यानलं प्रापयितुं खलु ।।१४।।

ससीमयाऽनया सिद्ध्या कालाब्धौ मज्जतां नृणाम् ।
मुक्तिचिन्ता सैकताभिर्महाब्धौ सेतुबन्धनम् ।।१५।।

यावत्कालं कालनद्या अभविष्यन्न शोषणम् ।
नाभविष्यत्समस्तानां जगतामुद्धृतिस्तदा ।।१६।।

आरोहमार्गमाश्रित्य पूर्णत्त्वं प्राप्य मानवः ।
जगत्समुद्धर्तुकामोऽवरोहाध्वानमाश्रयेत् ।।१७।।

पूर्व-जन्मज-संस्कारा यथाऽऽयान्तीह जन्मनि ।
एवं तत्राप्तसम्पत्तिमवरोहे प्रकाशयेत् ।।१८।।

ततो जित्वा कालशक्तिं पृथिवीषु समास्वपि ।
महाखण्डमखण्डञ्च गुरुराज्यं स्थिरं क्रियात् ।।१९।।

एतत्सिद्ध्यै समारभ्य कृपापूर्वक-कर्मतः ।
ज्ञानभक्त्योर्मध्यतश्च प्रेम यावत् क्रियाद्गतिम् ।।२०।।

कार्यमेतद् योगभाजां चरमं लक्ष्यमीरितम् ।
अन्यथा विश्वकल्याणं शशशृङ्गायितं भवेत् ।।२१।।

समस्त-जगतामेव प्राप्तव्यं परमं तु यत् ।
तत्तु पूर्णत्त्वमेवास्ति स्वस्वरूपावबोधनम् ।।२२।।

पर्याप्तास्तत्कृते चैव सकलाः साधना अपि ।
मत्त्वैतज्ज्ञानगङ्गीया संहत्य तत्र ते रताः ।।२३।।

समुपास्य महाशक्तिं तत्कृपालेशपूर्वकम् ।
कार्यं कार्यं स्वकं पूर्णं कृपाशून्यदिशा ततः ।।२४।।

ऐश्वर्यं तु प्रभोर्लभ्यं तत् कृपाशून्यकर्मणि ।
सिद्धत्यहो कार्यमेतत् सर्वमूर्ध्वतमस्तरे ।।२५।।

परं कृपाशून्य-मार्गे पूरणीयं ननु स्वकम् ।
कार्यमेतद्भवत्याहो भुवि पार्थिव-विग्रहे ।।२६।।

कृपाशून्यं कर्म कृत्त्वा प्रेमोदेति यदा तदा ।
महैश्वर्यं महाप्रेम यतेतैकीविधाय सः ।।२७।।

समष्टिव्यष्टिजं कर्म महासङ्कल्पतस्तदा ।
विधेयं साधकेन्द्रैस्तदेकत्रैवेति निश्चयः ।।२८।।

महाशक्तिर्महाप्रेम्णा सह कालाधिकारतः ।
जगत्त्रातुं स्वयं सैषा तत आयाति भूतलम् ।।२९।।

नित्यानन्दमयं धाम कालराज्ये प्रकाशितम् ।
कृत्त्वा शनैः शनैरेतत्खण्डकालं विलोपयेत् ।।३०।।

महालक्ष्ये तु पूर्णेऽस्मिन् जात एव महीतले ।
आविर्भवेद् ब्रह्म पूर्णं स्वत एवाद्भुतं हि तत् ।।३१।।

रहस्यालिसमाकीर्णं महाकार्यं समीरितम् ।
एतत्सिद्ध्यै मानवेन समाप्यः कर्मसञ्चयः ।।३२।।

एतत्कार्यं साधकेन्द्रैरारब्धव्यं कृपाबलात् ।
स्वकर्मणा च संशोध्य कर्मप्राधान्यमावहेत् ।।३३।।

कारं कारं कर्मजालं प्रतिजन्म सुसाधकाः ।
सृष्टितः साम्प्रतं यावत् पूर्णत्त्वं नैव लेभिरे ।।३४।।

सम्प्राप्य मानवं जन्म विधेयं कर्मपूरणम् ।
न योगमन्तरा कार्यैर्जन्मान्तरभवैर्भवेत् ।।३५।।

अहो, चित्रं! साधकेन्द्रैः क्रियमाणं पुनः पुनः ।
स्व-पूर्व-कर्मासंयोगान्न पूर्णं तद्भवेत् क्वचित् ।।३६।।

यदि लक्ष्ये भवेदिच्छा पूर्णत्त्वे वा भवेद्रुचिः ।
मानुषं जन्म सम्प्राप्य स्वं कर्म पूरयेद्धुरि ।।३७।।

प्रतिजन्म कर्म नूत्नं यत्नतोऽपि समाचरन् ।
नरः कल्पसहस्रैस्तु पूर्णतां नैव यास्यति ।।३८।।

प्रतिभवं भवेदिच्छा दीक्षाशिक्षासु यद्यपि ।
प्रधावतामन्यमार्गे लक्ष्यलाभः कथं नृणाम् ?।।३९।।

अनुलोमविलोमाभ्यामारोहेणावरोहतः ।
त्यागसंयोजनाभ्याञ्च पूरणीयं स्वकर्म तत् ।।४०।।

ज्ञानगङ्गाह्वया भूमिरेतदर्थं विनिर्मिता ।
सम्पूर्य कर्म कर्तव्यं कालात् स्वं मोचयेन्नरः ।।४१।।

कथं कर्म पूरयेत्तदेकजन्मनि साधकः ।
ज्ञानगञ्ज-प्रक्रियाऽलमेतच्छङ्का-समाधये ।।४२।।

यद्यपीयं दिव्यभूमिर्ज्ञानगञ्जावनिर्मता।
तथापि तु भोगभूमिर्न नाक इव सर्वथा।।४३।।

अधिकारिजीवभोग्या विभूतिनिलयालया।
योगितपोबलोद्भूता कर्मभूमिरियं मता।। ४४।।

ज्ञानगञ्जाश्रिता जीवा देहगेहाद्विनिर्गता।
संस्कारतस्तं व्रजन्ति स्वमूलं विकृता इव।।४५।।

अस्मिन्देहे कृतं कर्म यावत्स्यात्तदनन्तरम् ।
इष्टं शिष्टं तत्र शिष्टस्तत्परं तत्र पूरयेत् ।।४६।।

पूर्वजन्मत्रयीं दृष्ट्वा ज्ञानगञ्जोक्तमार्गतः ।
दीक्षाशिक्षा भवत्याहो साधकानां यतात्मनाम् ।।४७।।

तत्र योपासना जाता गरिष्ठा तत्परं ततः ।
अग्रे कर्मणि युक्तः स्यादिह जन्मनि मानवः ।।४८।।

अत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः कृतकृत्यो भवेद् यतः ।।४९।।

आकृष्य तु तदात्मानं तत्पूर्व-कर्म-योगतः ।
तस्यानुकूल-देवेन तपसा योजयेद् गुरुः ।।५०।।

एतत्कृपात्मकं कार्यं गुरुणा गुरुणा कृतम् ।
न प्रयासस्तु तत्रास्ति साधकस्याविजानतः ।।५१।।

गुरूपदिष्टमार्गेण निजेन श्रमजेन तु ।
यथादिष्टं साधितेन कर्मणा तत्तु शोधयेत् ।।५२।।

दक्षिणादक्षिणावर्तमार्गाभ्यां कर्मपूरणम् ।
अनुलोमविलोमाभ्यां क्रियासुर्लक्ष्यलिप्सवः ।।५३।।

उभाभ्यां हि प्रक्रियाभ्यामिष्टपूर्तिस्तथा भवेत् ।
करस्थमालामाश्रित्य शतपूतिर्यथा स्मृता ।।५४।।

वासनादिपरित्यागा अनुलोमक्रमे मताः ।
विकारास्ते विलोमे तु चिदानन्दमयीकृताः ।।५५।।

काम-क्रोध-लोभ-मोहा रिपवो ये पुराऽभवन् ।
मित्रीभूय तु भासन्ते स्वस्वरूपावबोधनात् ।।५६।।

पूरणे कर्मणो जाते सम्भवेल्लक्ष्यदर्शनम् ।
अतिक्रम्य मार्गराजिं यथा मन्दिरदर्शनम् ।।५७।।

अनुलोमे तु पञ्चाशद्विलोमेऽपि तथैव तत् ।
स्तराणां शतमस्त्यत्र त्यागसंयोजनात्मकम् ।।५८।।

उभयोरपि भेदस्तु कर्तव्यो योगिपुङ्गवैः ।
शतभेदि कार्यमेतदीरितं तेन हेतुना ।।५९।।

अतः परं यत्तु कार्यमुद्वृत्तं तत्समीरितम् ।
साधकानां निजस्यैतत् पविः कालमहागिरेः ।।६०।।

यावत्पञ्चमभूमिन्तु तत्र प्रथमभूमितः ।
पुरा योगिवरैरन्यै स्तरास्ते ते प्रकल्पिताः ।।६१।।

पूर्णत्त्व-प्राप्तये नालमेतन्मत्त्वा जगद्गुरुः ।
विशुद्धानन्द-योगीन्द्र स्तरौ तौ षष्ठ-सप्तमौ ।।६२।।

चक्रे चक्रेण तपसां ज्ञानप्रकृति-रूपिणौ ।
रिक्तस्थानं यथा दृष्ट्वा लोके स्याद्गृहनिर्मितिः ।।६३।।

हन्त, हन्त, कालराज्यान्निस्तारोऽत्रापि नो भवेत्।
महाप्रकृतिरेषापि कालराज्यानुवर्तिनी ।।६४।।

यदि वाञ्छास्ति पूर्णत्त्वे यदि मृत्युञ्जये स्पृहा।
अतिकालप्रीतिरस्ति तदाष्टमपदं व्रजेत् ।।६५।।

सप्तमाष्टमयोर्मध्ये भीषणा कालनिम्नगा।
अजेया दुस्तराऽगाथा बाधाशतसमाकुला ।।६६।।

कालप्रभोः कालसीमा समुद्र इव मेदिनीम्।
वेष्टयित्त्वा कालराज्यं वहति प्राणनाशिनी ।।६७।।

जिगमिषोस्तत्र साधोर्निजस्योपकृतिर्भवेत्।
अशेष-जगतां तेन सिद्धा नापि कपर्दिका ।।६८।।

यदि भूमतपस्याभिरगस्त्य इव सागरम्।
कालसिन्धुं शोषयेत्तु गुरुराज्यं व्रजेज्जगत् ।।६९।।

उत्तीर्य चाष्टमं स्थानं व्रजेत्स सिद्धयोगिराट्।
मरूकृतकालसिन्धुर्नवमं तु नवं पदम् ।।७०।।

नवमं स्थानमेतत्तु परमाद्वैतमीरितम्।
अनन्तगर्भमेकं तत् पूर्णत्त्वायतनं मतम् ।।७१।।

व्यवधानं तयोर्मध्ये कालनद्यात्मकं तु यत्।
भेदनं कठिनं तस्य वज्रस्येव दुरासदम् ।।७२।।

एतस्मिन् यतमानानां देहपातो भवे भवेत्।
ततः परं पूरणीयं शिष्टं तच्छोषणं तु यत् ।।७३।।

सप्तमे हि स्तरे भाति परमा प्रकृतिस्तु या।
ऊर्ध्वमुखत्रिकोणास्यमध्ये मण्डलमिष्यते ।।७४।।

कालनद्याः परे पारे स्थितं यदष्टमास्पदम् ।
अखण्डमण्डलाकारं तत्स्वरूपमितीर्यते ।।७५।।

तदाश्रित्यास्ति तन्मध्ये त्रिकोणं तदधोमुखम् ।
कालनद्येव कालिन्द्या जगदेतत् पृथक् कृतम् ।।७६।।

अखण्डमण्डलात् पूर्णादनन्त्यमध्यमैकतः ।
मरूकृतायां नूनं हि मस्यामस्यां कृतार्थता ।।७७।।

पूर्णत्त्वे तु समालब्धे सप्तमाष्टमयोर्द्वयोः ।
एकात्मता भवेत्तत्र तन्महामिलनं मतम् ।।७८।।

सामरस्यमेतदेव तदेव निजकाङ्क्षितम् ।
वस्तुतोऽद्वैतमत्रैव परिस्फुरति योगिनाम् ।।७९।।

तदा प्रभृति संसारः 'संसारः' स्याद् यथार्थतः ।
प्रेम-स्नेह-दयाऽऽनन्दा भविष्यन्ति जगत्यहो ।।८०।।

मृत्युरूपात् कालहस्ताज्जगद्रक्षा भविष्यति ।
जीवोऽवधूय जीवत्त्वं कृतकृत्यो भविष्यति ।।८१।।

अखण्डमण्डलं यत्तु तत्स्वरूपमिहोच्यते ।
अन्ते बहिश्च षट्कस्य विशुद्धमण्डलं स्थितम् ।।८२।।

मानवं जन्म सम्प्राप्य तपस्याया अलं किल ।
मत्त्वेति ज्ञानगञ्जीया अत्र कर्मणि संरताः ।।८३।।

ज्ञानगञ्जाश्रमो योगिवृन्दादृतः सर्वसिद्धाश्रमाणां शिरोभूषणम् ।
सिद्धिविद्यामहाम्भोधिमन्थाचलोऽप्याकरस्त्यागसत्यादिसम्पन्मणेः ।।८४।।

योगिराजेश्वरा ये मठस्थाः समे कर्म पूर्णं स्वकीयं विधायाऽचिरम् ।
विश्वकल्याणहेतोस्तिरस्कृत्य ते मुक्तिमुक्ता यतन्तेऽतिचित्रा नु सा !!८५।।

आत्मारामः पूर्णकालः कृती च
लक्ष्ये लब्धे हीनकालोऽभविष्यत् ।
मृत्युर्न स्यान्नो तदानीमभावः
सर्वत्राहो, भावराज्यं विशालम् ।।८६।।

मातृक्रोडे बालकः स्नेहपुष्टो
यद्वत्प्रेम्णा क्रीडति प्राप्तसर्वः ।
तूर्णं पूर्णे चापि लक्ष्ये तथैव
निर्द्वन्द्वं स्युर्मानवानां मनांसि ।।८७।।

अपि स यतीशो गुरुवचनानां
परवशचित्तो जगदखिलं तत् ।
समसमयात्काल-मुख-गतं च
सपदि विलोक्यात्मबलमियेष ।।८८।।

असौ यतिपतिस्ततः कृतसमस्तकार्यो मुदा
विजित्य तपसाऽतनुं विकट-काल-पाथोनिधिम् ।
समस्तजगतामहो विहितनिश्चयः सत्त्वरं
परं च भविकं स्वतो भुवि चिकीर्षुरिवाभवत् ।।८९।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारहीरप्रभा-
गोपीनाथकृपाकटाक्षकणिकापीयूषयूषश्रयः ।
एष श्रीमनुदेवपण्डितकविस्तस्य प्रबन्धेऽधुना
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽष्टमः पूरितः ।।९०।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतमनुदेवभट्टाचार्यविरचिते
विशुद्धवैभवे महाकाव्ये अष्टमः सर्गः।।*



# विशुद्धवैभवं महाकाव्यम्

## नवमः सर्गः

अथ चिराय बभूव विलोक्य तं
भुवि सुदुर्जय-कामजय-व्रतम् ।
सकल-लोकजयैक-दृढव्रतो
ऋतुसखस्तु स खल्वपि चिन्तितः ।।१।।

अभवदत्र यतौ तपसि स्थितेऽ-
समशरस्य कदाचिदपीशता ।
चिरममुष्य युवत्त्वभृतो यत-
श्चपलतापलता प्रबभूव नो ।।२।।

विजित-लोभ-मदादि-महारयो
रयजिताऽतिखलेन्द्रियसञ्चयाः ।
करकुटीर-पुटीकृतवाङ्मयाः
किमु मुहुर्मुमुहुर्न महर्षयः ।।३।।

परमहो स्वमहोविजितेन्द्रियो
गुरु-पदाब्जयुगैक-मधुव्रतः ।
विषमये समये क्वचिदप्यसौ
मुनिरयं निरयं गतवान्नहि ।।४।।

स तु वटुत्वमपास्य यदाऽभवद्
विधृतदण्डकरश्च परीक्षितः ।
अकृषतात्मभुवोऽपि समेत्य ते
किमरयोऽमरयोषिति निःस्पृहे ।।५।।

परमतो गुरुणा गुरुणाऽपि यः
स गदितो गदितो न बभूव भोः ।
विहित-दार-परिग्रह-मङ्गलो
निजगृहे जगृहे च यतिव्रतम् ।।६।।

अथ कदाचिदसौ रजनीकरो
निजकरैर्निकरैरिव तेजसाम् ।
तिमिर-वृन्दमपाकरणाय यः
शुभमयो भमयोऽपि शशाक नो ।।७।।

पुरुपरिश्रमतोऽपि यदाऽभवद्
न तमसामपकर्तुमसौ प्रभुः ।
न निज-शक्ति-वशं स च चिन्तयन्
मुखकजं खकजं व तदास्य तत् ।।८।।

प्रभवति स्म चिरं न विधुर्यदा
नसफलं च विलोक्य तदा प्रभुः ।
सपदि चैष नभस्तलमागतो
दिनकरो न करोति किमुद्गतः ।।९।।

स तु शरैः स्वकरैरभवत् खरै-
रिव पराजित-भूधर-मण्डलः ।
झगिति तस्य विलोक्य पराक्रमं
द्विजगणोऽजगणो व पलायितः ।।१०।।

किमु मदीयमहो हि महामहा
विजितवानिति शङ्कितमानसः ।
खरकरो ह्युदियाय झटित्यथो
स्वतपसाऽऽतपसाम्यभृताऽन्वितः ।।११।।

अथ सरः शनकैः स विभाकरः
कजचयं ननु भेत्तुमिवागतः ।
मधुकरै रुचि-भिन्नदलाऽमलां
कमलिनीं मलिनीं विदधाति यः ।।१२।।

सुरपति-द्विप-कुम्भ-घटाभवं
बहुल-लोहित-रेणु-महाचयम् ।
प्रगदिता मिहिरेण दधार दिक्
कुरु चिरं रुचिरं किमु वैभवम् ।।१३।।

उदय-भूधर-राज-तटी-गलद्-
विपुल-धातुचयैरिव लोहितः ।
मधुप-मञ्जुल-गुञ्जन-शिञ्जितं
सुकमलं कमलङ्कृतवान् रविः ।।१४।।

स्व-कर-भिन्न-सरोज-पुटोज्झितं
स्वरुणिमानमसौ किमचोरयत् ।
अभवदेष वराटककेशरा-
लिरजसा रजसा किमु लोहितः ।।१५।।

कमल-कुड्मल-मण्डल-कोटितोऽ-
तितरसा कमलाग्रहणेच्छुकः ।
विषयिचञ्चलमेव समादिशत्
स चतुरश्च तुरङ्गमसप्तकम् ।।१६।।

नयन-रश्मि-समाहित-भूतलाऽ-
वनिधरान्वयजाऽपचितिव्रता ।
स्वकर-दीप्ति-प्रभावित-पङ्कजा
तरुणताऽरुणता व विराजिता ।।१७।।

सफल-वाङ्-मुनि-चक्र-कराम्बुजाऽ-
रुणिम-सारमसौ हृतवान् किमु ।
अथ न चेदिह रक्तमुखः कथं
भुवि बुधैर्विबुधैर्दिवि योऽर्चितः ?।।१८।।

स धरणीतर-मण्डल-खण्डभू-
सुपरिचङ्क्रमणश्रमदारुणः ।
इह समागत एष विकासयन्
जगददो गददोषविनाशकृत् ।।१९।।

स्फुटदशेष-सरोज-रजोमयं
दलदलन्मधुशीधुपृषद्भृशम् ।
अथ सरः स जगाम यतीश्वरः
सहृदयो हृदयोज्झितमत्सरः ।।२०।।

स तु वगाहन-निश्चय-मानसः
प्रतिययौ विमलं सरसीतटम् ।
विधृत-दण्ड-करेण मुखश्रिया
विभवतो भवतोऽधिकमाबभौ ।।२१।।

अथ सरश्च निजैस्स्म विशेषणै-
रनुकरोति च योगि-तनोस्तदा ।
स्वसदृशं च चकर्ष महायतिं
स्वमनुजं मनुजं तु यथाबली ।।२२।।

शम-दमादि-परिष्कृत-मानसो
विमल-मानसतुल्यमगात्सरः ।
तटतरुस्थित-पक्षिकुला-कुलं
निजबलेऽजबले समचेतनः ।।२३।।

अथ ददर्श सरस्तटसंस्थितां
मदन-शक्ति-समष्टि-चयाप्लुताम् ।
इव स काञ्चन काञ्चननिर्मितां
मघवताऽघवताऽपि च वाञ्छिताम् ।।२४।।

मदन-गर्व-महीधर-वज्रहृद्
युवति-चक्र-परीक्षण-शिक्षितः ।
स विपुलं सपदि श्रितवानहो
निजबलं जवलङ्घित-दर्पकः ।।२५।।

सुचिर-काल-तपश्चरण-क्रिया-
विजित-सर्व-हृषीक-महाहयाः ।
भुवि भवन्त्यपि ये ननु तादृशां
बलवतां लवतामपि को जयेत् ।।२६।।

विपुल-धैर्यमथास्य विलोक्य यो
बहुल-काल-महा-तपसाऽर्जितम् ।
मनुज-लोक-सुदुर्लभमेव तद्
महिमवान् हिमवान्ननु विस्मितः !!२७।।

अवनितो रमणी-रमणीयता
किमु घनीविहिता विधिना तदा ।
जितवती खलु या तनुतो यतिं
जगति हा गतिहानिरभूद् यतः ।।२८।।

गतिमता यम-होम-गतांहसा
सुमतिना यतिना मुहुरीक्षिता ।
रतिपतिश्च ददौ रतिवश्यतां
निजपतेर्जपते शुभ-कीर्तनम् ।।२९।।

निज-महो-जित-सर्व-मरुद्गणं
विषयि-मार्ग-निरुद्ध-गुहा-स्थितम् ।
मलयगन्धवहानुचरैर्युतो
मनसिजोऽनसि योक्तुमभूत्प्रभुः ।।३०।।

दयितयोदयितो धुरि मन्मथो
निजयशो जगतीविजयोन्मुखः ।
खलु खलो ननु भङ्क्तुमिवागतोऽ-
प्यहितयाऽहितया हि तया सह ।।३१।।

अमुमहो निभृतं समवाप्य यः
किमरोद् मकरोद्धतकेतनः ।
अभवदस्य हि लाभचयस्तदा
परिचयेऽरिचयेन भवत्यथ ।।३२।।

मुहुरहो विलयीकृतदर्पकं
सपदि तं च विलोक्य सुविस्मिताः ।
धिषणया धिषणालिभयप्रदं
भुवि बुधा विबुधाश्च सुरालये ।।३३।।

मनसि तस्य तदाविरभूदथो
रतिमयः किल भाव उपेक्ष्य तम् ।
समभवत् क्षणकार्धनिमेषतो
भयमयोऽयमयोघननिश्चलः ।।३४।।

अपि निवृत्य ततोऽनु धृतव्रतोऽ-
कृतवगाहन एव हृदा नतः ।
स भृगुरामपदं शरणं गतः
प्रजगदे जगदेकयतिं वचः ।।३५।।

'अतिपवित्रतमे पुनराश्रमे
यतिगुरो भवितुं प्रभवेत्क्वचित् ?
कथमपीह कदा सदृशोऽपि हा
नु मयकाऽऽमयकामपरीतहृत् ।।३६।।

तदिह तूर्णमपास्य मयि श्रितां
मतिमिमां मम दण्डमिहादिश ।
अथ बहिष्कृतिरेव ममोचिताऽ-
त्रभवतो भवतो वचनाद् भवेत् ।।३७।।

इति तदीरित-वाक्य-चयं तदा
स तु निशम्य वचोऽचकथन्मुनिः ।
अकपटं हृदयं प्रसमीक्ष्य यो
यमरतोऽमरतोऽपि पुरस्कृतः ।।३८।।

'तव हृदस्तु विलोक्य सितात्मतां
सपदि तां नर-जन्म-सुदुर्लभाम् ।
गतदयो हि वदामि वदान्य हे
न ममतां मम तां गणयामि भोः ।।३९।।

जगति दुर्जय-कामरिपौ जयं
जप सदाऽऽप्नुहि शीघ्रमतः परम् ।
धुरि ददामि महातपसे च ते
मनुमहो नु महोधरणीधरम् ।।४०।।

परमितो न कदाचिदपि त्वयि
समुदयो मदनस्य भविष्यति ।
मम वचोऽन्यपथं यदि तद् व्रजेद्
भवचयोऽव च यो विलयं व्रजेत्' ।।४१।।

अथ कदाचिदमुष्य विलोक्य तं
स भृगुरामयतिः स्म च पृच्छति ।
चरण-दक्षिण-भग्न-कनिष्ठिकां
स्वतपसाऽऽर्तपशावतिचिन्तितः ।।४२।।

रुचिरभृङ्ग-विभूषित-पङ्कजं
वटुरयं सुमनाः स विडम्बयन् ।
सुविनतेन जगौ शिरसा नमन्
शुभवचो भवचोषणचुञ्चुचित् ।।४३।।

'मम शिशुत्त्वमये समये कदा-
चिदपि कर्तरिकामवलम्ब्य ताम् ।
अभवदेव हि वस्तुकखण्डने
सपदि हा पदि हानिरथाङ्गुलेः' ।।४४।।

इति निशम्य तदीय-वचांसि यो
झटिति यन्त्रबलेन तदङ्गुलिम् ।
अथ भवत्यपि तूर्णमपूरयद्
निजबले जवलेशजिताशुगः ।।४५।।

स तु ततः परिपूर्णपदाङ्गुलि-
र्गगनतो गमने धरणीं प्रभुः ।
यमिविधीननुसृत्य पदाऽचरत्
सुमहितामहितारबलोद्धताम् ।।४६।।

गिरिश-लिङ्गमपि त्रिदशार्चितं
तदथ दातुममुष्य कृपार्णवः ।
सपदि निश्चितवान् यतिराडहो
इदमसौ दमसौधमहाधनः ।।४७।।

सकलचिन्मयवाङ्मयतन्मयः
स भृगुरामयतिर्नियतीश्वरः ।
ननु महासुकृतव्रज एव यः
किमुदितो मुदितोऽस्य यतो गुरुः ।।४८।।

अथ विवादरवः सुमहानभूत्
समतपोऽर्जन-मार्ग-निदानकम् ।
किमिति लिङ्गमिदं खलु दीयतेऽ-
ल्पवयसे वयसे तु यथा मणिः !।४९।।

हरिहरोऽरिहरो हर ईदृशोऽ-
तिमहिमाऽतिमहोऽतिमहोदधिः ।
यमवलम्ब्य कृते सुकृते विधौ
चतुरताऽऽतुरता तु रताऽरते ।।५०।।

धुरि निनाय तदुन्नति-नीतिवित्
प्रणति-पूर्वकमाह वचोऽमलम् ।
स हि महातपसस्तु तपोऽम्बुधे-
र्विनयतो नयतोषितसद्गुरुः ।।५१।।

'अयि गुरोऽहममुष्य तपस्यया
प्रमुदितश्च विविच्य ददामि तत् ।
हरिहराह्वयलिङ्गमिदं यतोऽ-
स्त्ययमहो यमहोमगताघहृत् ।।५२।।

भवदनुग्रह-विग्रह-सङ्ग्रह-
ग्रहपति-ग्रहणाऽऽग्रहिलं गुरो ।
सुविमलाऽऽग्रहगेहमथो गिरा
गतमलं तमलं कुरुताद् भवान्' ।।५३।।

सपदि नूनमसौ भृगुरामतो
हरिहराह्वयलिङ्गमवाप्य तद् ।
त्रिजगदेतदहो तरसा ध्रुवं
निरयतो रयतो ह्वतवानतः ।।५४।।

स तदवाप्य महातपसाऽञ्जसा
प्रतिदिशं प्रततान ततो नवम् ।
तदधिकन्दधिकन्दसमुज्ज्वलं
निजयशो जयशोभितदिङ्मुखम् ।।५५।।

इत्थं नादातुमीशा बहुनियुतसमाकाः समे योगिवर्या
दुर्धर्षं यस्य तेजः प्रतिदिनमथ बोभोति यद् योगिनाञ्च ।
आदायैनच्च सर्वे यमयतयतयः साधनाध्यानधन्या
लिङ्गं तत्सोऽत्र लब्ध्वाऽभवदिह भवतस्तुल्य एव स्वभूत्या ।।५६।।

प्राप्य यो हरिहराह्वयलिङ्गं
योगिराड् वदनगह्वरदेशे ।
पूजनावसरभिन्नमुहूर्ते
प्रत्यहं स निभृतं हि ररक्ष ।।५७।।

गुर्वाज्ञावश्यवश्यस्तदथ च जगृहे, स्वालयेऽसौ तु पश्चाद्
भ्रूमध्यात्तत् त्रिशूलं बहिरभवददो यत्पुरोक्तं च तेन ।
वेलाया ह्रासवृद्ध्योर्भवति च सततं वर्णवैभिन्न्यमस्य
नाम्ना यद् वण्डुलेशेन विदितमभवत्तत्प्रतिष्ठाञ्चकार ।।५८।।

पूजका हरिहराह्वयशम्भो-
र्योगिनः खलु समेत्य समे ते ।
वण्डुलं विदधति स्म सपर्यां
नो तपश्चयवतां तदसाध्यम् ।।५९।।

एवं श्रीकविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथकृपाकटाक्षविगलत्पीयूषयूषश्रयः।
सर्गश्श्रीमनुदेव एष नवमस्तस्य प्रबन्धे महा-
काव्ये हन्त विशुद्धवैभवमयेऽलङ्कारझङ्कारकः ।।६०।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतमनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये नवमः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## दशमः सर्गः

एवं तपोधनमतेः पुनरेव तत्र
सिद्धाश्रमे सकलसिद्ध-गणैक-सेव्ये ।
सन्न्यासमार्गमवलम्ब्य यतीश्वरस्य
कालो महानपि विलोकयतो जगाम ।।१।।

तस्यैकमन्त्रजप-मार्गणनष्टशत्रोः
प्रोद्भूतशक्तिनमदण्डचतुष्टयस्य ।
पादाब्जयोः शुशुभिरेऽखिल-सिद्धयस्ताः
प्राप्त्यादयः किल पुटीकृत-हस्तयुग्माः ।।२।।

राजत्तपश्चय-निरुद्ध-समेन्द्रियाश्वो
भूयस्तिरस्कृत-मदादिकशत्रुसङ्घः ।
सन्न्यासिदेशिक इह स्वगुरूपदेशात्
पृथ्वीमिमां स खलु पर्यटितुं प्रवृत्तः ।।३।।

यद्यप्यसौ भ्रमणतो बहुवारमासीद्
भूमण्डलेऽत्र हरितासु समासु तासु ।
सर्वत्र तस्य वसतोऽपि सतो बभूव
नो वा कदापि च तपश्चरणेषु हानिः ।।४।।

कुत्राप्यथाऽभवदयं ननु यत्र तत्र
सर्वत्र यः स्वगुरु-पादकजं दधार ।
शिष्यः स्वकः क्वचिदपीह वसेत् तथाऽन्ते-
वासी यथार्थपदवी किल बोभवीति ।।५।।

यः पर्यटन् धरणि-मण्डलमेव भूय-
स्तीर्थाज्ञया निखिल-तीर्थ-सुदर्शनाय ।
वाराणसीसदृशतीर्थमहो ददर्श
नैव क्वचित् सकल-सूक्ष्म-पदार्थवेत्ता ।।६।।

सन्त्यत्र यद्यपि महीपटले महत्य-
स्ता मुक्तिदा मरणतो रणतो व पृथ्व्यः ।
आढ्या सदा निरुपमैः परमाणुजालै-
र्वाराणसी जयति पण्डितराजधानी ।।७।।

ते मुक्तिदा हि परमाणव इत्यवेहि
यैर्भूषिता विजयते भुवि काशिकेयम् ।
सिद्धाऽणुभिः कृतिरहो, च तथापि शम्भोः
निर्वाणदेतिपदवी न दवीयसी सा ।।८।।

वाराणसीमरणतस्तु न तदुत्तरं स्यात्
प्रेतस्य तस्य च महापरिवर्तनं यत् ।
एतद्धि मोक्ष-पदवाच्यमुदीरितं च
तत्सम्भवेद्विपुल-भाग्यबलान्नराणाम् ।।९।।

वाराणसी निरुपमा भुवि सिद्धभूमिः
सा वस्तुतो विजयते गिरिशत्रिशूले ।
एषा तु तत्प्रतिनिधिश्च विभाति साम्याद्
उक्तं मयेदमपि पञ्चमसर्गमध्ये ।।१०।।

एवङ् क्रमेण बहुधा बहुवारमेष
देशाटनं विहितवान् परमस्तपस्वी ।
गुर्वाज्ञयैव तु विभूति-परीत-मूर्तिः
कामादि-दोषमखिलं परिभूय भूयः ।।११।।

मातुश्च दर्शनमपि भ्रमणप्रसङ्गे
तत्पाद-संरतमतिः स्म चरीकरीति ।
तां मातरं स इह मूर्तिमतीमिव स्वां
सम्मन्यते स्म यतिराड् भुवने भवानीम् ।।१२।।

कुत्रापि भूमिवलये परमस्तपस्वी
मात्रा स्मृतः सपदि तत्क्षण एव तत्र ।
स्याद् दुर्ग-पर्वत-वनाब्धि-गणानतीत्य
तत्पादमूलमिह यः स उपाजगाम ।।१३।।

एवं पुनः पुनरथो यतिचक्रशक्रो
यः पर्यटन्नवनिमण्डल-खण्ड-भाण्डम् ।
श्रीपादपङ्कज-परागरजांसि मातु-
र्मूर्ध्ना दधार बहुपुण्यचयैक-शाली ।।१४।।

अस्मिन् कदाचिदपि सद्म समागते तु
भ्राता गुरुश्च जननी बहु मेनिरे ते ।
यस्मात्तपश्चयमयोऽयमिति प्रतीक्ष्यो
बोधाद् गुरुर्हि मुखजः सततं मनूक्तेः ।।१५।।

मामण्डयते स्म स कदापि च जन्मभूमिं
स्वेनैव तेन तपसा परिभाव्य सूर्यम् ।
तस्याग्रजः प्रखरधीरिह भूतनाथो
नम्रत्त्वमेत्य कथनं कथयाम्बभूवे ।।१६।।

भ्रातस्त्वया स्वतपसाऽऽतपसाम्यभाजा
शश्वत्तपोनिधि-गुरूक्तिकृतादरेण ।
सन्तोष्य सर्वमपि तद् विहितं स्ववश्यं
नो त्वत्कृते किमपि साम्प्रतमस्त्यसाध्यम् ।।१७।।

स त्वं महासुकृतवारिधि-मन्दराद्रि-
रभ्यस्त-पूर्णनियमादिक-कर्मचुञ्चुः ।
शास्त्रीय-मार्गगण-मार्गण-कर्मधर्मा
ब्रह्माण्ड-मण्डलगताऽखिलतत्त्व-वेत्ता ।।१८।।

तस्मान्मदीय-वचनादिह कार्यमेकं
भ्रातः कुरुष्व मम सोदर, साऽस्ति वाञ्छा ।
यत्साम्प्रतं भवति साम्प्रतमेव मन्ये
भूयो मदीयहृदयेऽप्यभिचाकशीति ।।१९।।

यातः प्रतीक्ष्य-चरणः सुकृतैकसिन्धुः
त्वज्जन्मदः स च विशेषत इत्यवेहि ।
यश्चावयोरपि पिताऽखिलचन्द्रशर्मा
बाल्ये वयस्यथ गुरुः खलु हापितो यः ।।२०।।

शोश्रूयते हि मयका ननु जीव एष
मृत्त्वापि न व्रजति नाशमहो कदाचित् ।
भ्रातस्तवाऽतुलतपश्चयसारतोऽत्र
तद्दर्शनं भवति चेदथ तत्प्रकल्प्यम् ।।२१।।

पूज्याग्रजेन गदितः स उवाच वाचं
भ्रातः शृणुष्व वचनं मम साम्प्रतं यत् ।
विज्ञानयोगजनि-शक्ति-बलैरशक्यं
नास्ति त्रिलोकवलये ननु वस्तुजातम् ।।२२।।

साक्षात्कृत-श्रुति-ततिर्धिषणाब्धिकृष्ण-
द्वैपायनः सुतधनं स च सत्यवत्याः ।
सङ्ख्ये मृतान् कुरुजनान् च परीक्षितं तं
यः प्रार्थितः सपदि दर्शितवान् तपोभिः ।।२३।।

इच्छावशीकृत-समस्त-जगद्गणस्य
ब्रह्माण्ड-कन्दुक-कृताखिल-खेलकस्य ।
उद्यत्तपोऽम्बुधि-परिष्कृत-हृन्मलस्य
योगीश्वरस्य कतमा कृतिरस्त्यशक्या ।।२४।।

किन्त्वत्र साम्प्रतमिदं किमु साम्प्रतं स्याद्
मृत्युर्हि वेशपरिवर्तनमित्यवेहि ।
सर्वेऽमरा जगति सन्ति च मे कृतान्तः
शोकाकुलं नहि मनः करणीयमातः ।।२५।।

दृष्ट्वापि तातचरणान् भवतो यदि स्याद्
धैर्यच्युतिः कथमपि प्रभवेदनिष्टम् ।
तस्मात्प्रभोस्तु करुणावरुणालयस्य
कार्यं हि तच्छुभमिदं हि विचारणीयम् ।।२६।।

उक्तोऽप्यनेन स भृशं विरही तदानीं
तातस्य दर्शनमनाः खलु तत्कृते हि ।
स व्याजहार च यदा खलु तद् विधातुं
तत्कार्ययुक्तकरणं तदथादिदेश ।।२७।।

जानात्ययं स्म यतिपङ्कज-चण्डरश्मिः
प्रेतं विलोक्य नु भवेदनु सोऽपि मत्तः ।
सर्वं विचिन्त्य च तदीय-वचोऽनुसारं
सारं जगाद यतधीस्तदसाध्यसिद्ध्यै ।।२८।।

एकं सुसज्जितमभूद्विमलं निशान्त-
मेका च तत्र निहिता रुचिराऽथ शय्या ।
पश्चात्ततः स्वकतपोबलतः स्वतातं
स्वभ्रातृ-वाक्यपरवान् स तमानयच्च ।।२९।।

रूपं तदेव वचनं च तदेव दृष्टं
गात्रं तदेव, सकलावयवास्तथाऽऽसन् ।
स्थित्वा च पञ्चदशक-क्षणदघ्न-कालं
मूर्तिस्ततो व्यपगताऽद्भुतमेतदासीत् ।।३०।।

पश्चात्कदाचिदपि तस्य पिता समेतः
पृष्टः सुतेन 'वसतिस्तव कुत्र लोके'? ।
प्रत्यब्रवीत्तु 'तव पुण्यबलैस्तपस्या-
केतोऽष्टमस्तर' इति प्रभवे यतीनाम् ।।३१।।

पश्चात्ततः स वचनं प्रजगाद भूयः
'स्थाने किलात्रभवतां किमु कारयाणि' ?
अन्तर्हितो न वचनं ह्यगदत् समस्तं
स्थानेऽशनं खलु बभूव कुमारिकाणाम् ।।३२।।

एवं महायतिपतिः किल सिद्धि-सिन्धुः
संसार-दुःख-परिपीडित-लोकबन्धुः ।
भूत्वाऽपि विश्ववलये नितरां समर्थो
मातुः पितुर्वचनपालनमेव चक्रे ।।३३।।

एवं कदाचिदपि पर्यटितुं प्रवृत्तः
बभ्राम भूमिवलयं बहुधा स योगी ।
मातुः पदाम्बुरुह-दर्शनकामनातो
भूयः समागमदसौ खलु बण्डुलं तम् ।।३४।।

जातस्तदा ननु तदग्रज एष भूत-
नाथो हि रोग-रिपु-पीडित-देहदुर्गः ।
कृत्त्वाऽपि तस्य विपुलामपि तां चिकित्सां
रोगस्य शान्तिरभवन्न कथञ्चिदेव ।।३५।।

माता मता चरणकञ्जनतं तु राज-
राजेश्वरी तु सहसा जगदीश्वरीव।
स्वजेष्ठ-पुत्र-परिरक्षण-चिन्तिता तु
सा व्याजहार वचनं स्वकनिष्ठपुत्रम्।।३६।।

'हे पुत्र, तेऽग्रजवरो निज-कर्मतस्तु
सम्पीडितोऽस्त्यति-भृशं खल-रोग-जालैः।
कालाहिभिः स इव यस्य न जीवनाशा
शिष्टाऽस्ति, तं सपदि जीवय नैजशक्त्या।।३७।।

उक्तस्तदैवमथ यस्तरसा जनन्या
'त्वद्-वाक्यमात्र-परवान् प्रकरोमि सर्वम्।'
रोगातुरस्वसुत-चिन्तन-शोक-शुष्कां
प्रत्यब्रवीत् तदनु सोदरपार्श्वमाप।।३८।।

दृष्ट्वैव तं तु करुणा-वरुणालयो हि
स्वभ्रातरं सगदकातरमत्र तूर्णम्।
स्वानन्य-दीर्घ-तपसस्तरसा बलेन
नीरोगमेव विदधेऽखिलमाप्तुमीशः।।३९।।

कृत्वा तु तं गतरुजं स ततो जगाम
तस्मै तदा निरुपमं कवचं प्रदाय।
स्वीय-क्रिया-बल-फलैरखिलार्थबोद्धा
ज्येष्ठं निषिद्ध्य सततं तमभक्ष्यभक्षात्।।४०।।

हा हन्त हन्त निजसोदर-योगिना यो
भूयो दयाऽमृतधिनाऽपि निषिद्ध एषः।
चाखद्यते स्म सकलानि निषिद्धकानि
नो रक्षणं भवति कालमुखं गतानाम्।।४१।।

पश्चात् पुनर्निज-कुकर्मत एव सद्यो
रोगारिणाऽभवदसौ खलु पीडितस्तु ।
आसन्नमृत्युरभवत्स यदा तु तस्य
माताऽऽजुहाव सुतकं तु पुनर्निजेष्टम् ।।४२।।

आकारितस्त्वरित एव तदा तु तस्याः
स्वग्राममेव तनयोऽतिनयो जगाम ।
आगम्य मातरमथो स उवाच वाचं
स्पष्टाक्षर-स्फुटसमस्त-रहस्य-गर्भाम् ।।४३।।

'मातः, पुनर्नहि मदग्रज एष एव
जीविष्यतीति मम निश्चलवाक्यमस्ति ।
यो मन्निषिद्धविधिमेव हि सेवते हा
हन्ताऽग्रजान्तमहमेव विलोकयामि' ।।४४।।

व्याहृत्य सोऽथ वचनं किल तस्य मृत्यो-
रुक्त्वा तिथिं च समयं प्रजगाम मात्रे ।
भ्रातुर्बभूव मरणं हि तदुक्तकाले
मुक्तिर्न कालमुख-चर्वित-चर्वणानाम् ।।४५।।

स्वां मातरं तनयमृत्युविवृद्धशोकां
स्पृष्ट्वैव तां स्वकरपल्लवतल्लजाभ्याम् ।
चक्रे तदा झगिति तामपि वीतशोकां
किं योगिनां विभवतोऽत्र भवत्यभाव्यम् ।।४६।।

मातुस्तदा वचनतश्च नतः स योगी
ग्रामे स्वके कतिपयान्दिवसानतिष्ठत् ।
तस्यास्तु यद्यपि स वाक्परवान्तथाऽपि
नो वस्तुतोऽभवदमुष्य गृहेषु माया ।।४७।।

जातं पुरा किल तदग्रजकन्यकाया
उद्वाह-कार्यमगदन्निभृतं प्रसूं स्वाम्।
'पश्चाद्विवाहविधितो भविताऽव, मातः!
वैधव्यमेव' च बभूव तदेव सत्यम्।।४८।।

एवं महीमटत एव जगाम कालः
सांसारिकानुभवमर्जयतो यतेस्तु।
सन्न्यासविध्युचितवर्षचतुष्टयाढ्यः
सिद्धाश्रमोक्त-विधिना च तपस्समग्रम्।।४९।।

पश्चादवाप्य वचनं स्वगुरोर्यतीन्द्रः
संसार-कार्य-करणार्थमभूत्प्रविष्टः।
शश्वत्तपश्चय-बलादपि रोग-सङ्घान्
दूरीचकार हि नृणामभवच्च रिक्थम्।।५०।।

यो वण्डुलान्तिकपदे खलु गुष्करायां
चोङ्दार-भूमिपतिगेहमलञ्चकार।
तत्र स्थितो बहुविधौषध-सञ्चयैस्तु
शान्ती रुजामकृत सर्वकृतौ समर्थः।।५१।।

प्रोद्यत्प्रतापपरितापितशत्रुरामा-
जेगीयमानसुयशःस्त्रगलङ्कृतो यः।
चोङ्दारवंशजलधीन्दुरसावभूद् ह-
रिश्चन्द्रनामनृपतिः स तु लोकभूतिः।।५२।।

एतेन भूमिपतिना भृशमेव योगी
स प्रार्थितोऽतिकरुणो ह्यवसत्तदीये।
न्यायालये, तदनु सर्वनृणामसाध्य-
रोगानशामयदहो, तपसां प्रभावात्।।५३।।

यस्याऽभवत्तु यतिना ह्यमुना चिकित्सा
मृत्युस्तु तस्य हि वियत्कुसुमायमानः ।
यो नैव रोगशमनं, ह्यपि तन्निदानं
शक्त्या समूलमणुदघ्नमसौ जघान ।।५४।।

यो ज्योतिषेण किल तेन च 'देव'-'राज'-
नाम्ना सदा परिचितेतरमानुषाणाम् ।
स्वीयेच्छयैव कृतवानपि तानदृष्ट्वा
स्पष्टामथो अवितथां जनिकुण्डलीं ताम् ।।५५।।

सामर्थ्यसामनयवश्यजगत्प्रपञ्चो
भूरिश्रमाधिकृत-शास्त्र-रहस्य-जालः ।
प्रोद्यत्तपोरवि-तिरस्कृत-मोहरात्री
रेजे त्रिनेत्र इव यो यतिराजराजः ।।५६।।

यद्यप्यसौ निजगुरूक्तवचांसि मत्त्वा
लग्नो धनार्जनकृते समलोष्टहेमा ।
चित्तं तु तस्य नितरां तपसि प्रसक्तो
धन्या सदैव धरणौ गुरुभक्तिरेषा ।।५७।।

आस्वादिताऽमृतरसः किमु याति निम्बं
यो वीतरागहृदयः किमु तस्य गेहम् ।
स्वप्नावभास-सदृशोऽपि च यस्य लोकः
द्रव्यन्तु तस्य गुरुवाक्यत इत्यवेहि ।।५८।।

द्रव्याण्युपार्ज्य तदनन्तरमेष भिक्षुः
सर्वैर्निजार्जित-धनैर्ननु वीतमोहः ।
देवार्चनामतिथिसत्कृतिमार्तसेवां
पुण्यानि तान्यकृत चैष महान्ति भूयः ।।५९।।

एवं विलोक्य तनयं सुनयं कनिष्ठ-
माचारनिष्ठमखिलाऽऽगमतत्त्वसिन्धुम् ।
मातृत्त्व-गर्व-भर-कीर्तिरसौ हि राज-
राजेश्वरी तु जननी नितरां तुतोष ।।६०।।

दृष्ट्वा धनार्जनजनव्रतकर्मलग्नं
स्वीयं सुतं निरुपमं सुखमाप माता ।
का नो भवेद्भवसमं विभवेन पुत्रं
माता भवे प्रमुदिता प्रसमीक्ष्य सद्यः ।।६१।।

अथ किल जननी सा राजराजेश्वरी तु
निजतनयविवाहार्थं विचारं चकार ।
अपि विपुलतपश्चर्याचणो योगिपुत्रो
न भवति रमणीभिन्नः कथञ्चित्सुखाय ।।६२।।

तदनु च समयं माता विलोक्याह पुत्रं
परिणयकरणायानन्दपाथोधिमग्ना ।
सुसुत, तव रमण्याः शिञ्जितैर्नूपुराणां
निनदमुखरगेहं स्याद्यथा तत्प्रकल्प्यम् ।।६३।।

इत्थं श्रीकविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथकृपाकटाक्षकरुणापीयूषसंस्नापितः ।
सोऽयं श्रीमनुदेव एष दशमस्तस्य प्रबन्धेऽभवत्
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽधुना सुन्दरः ।।६४।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतमनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये दशमः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## एकादशः सर्गः

गच्छताऽनेहसा योगी कियता नियतात्मधीः ।
क्रियासमभिहारेण जनन्या हि प्रचोदितः ।।१।।

वंशवंशरत्नमेनं कुलाम्भोनिधिकौस्तुभम् ।
रमण्या हीनमालोक्य मनस्तस्या अखिद्यत ।।२।।

योगिराजाधिराजेन्द्रं तपोरत्नाकराऽऽकरम् ।
पुत्रं लब्ध्वाऽपि नो तोषो मनसो गतिरीदृशी ।।३।।

तपश्चर्याऽऽश्चर्य-सिद्धिरत्न-रत्नाकरोपमः ।
वामया रहितः सूनुरहितः सोऽभवद् यथा ।।४।।

अमृताम्भोधिमध्यस्थमहापुण्यतपोऽचलः ।
अरामोहि सुतस्तस्यास्तदा प्लुष्टोषरायते ।।५।।

राज-राजेश्वरी-तुल्य-राजराजेश्वरीवचः ।
योगिराजाधिराजोऽपि राजवाक्यममन्यत ।।६।।

व्याजहार समं वस्तु गुरवे गुरुगौरवम् ।
करुणावरुणाऽऽधारगुरुणाऽऽदिष्ट एव सः ।।७।।

विवाहयोग्यता तावत् प्रकृतिस्वामिताऽमिता ।
कथङ्कारमकृत्त्वा तं कृतकृत्यः कृती भवेत् ।।८।।

आश्रमादाश्रमं सर्वे व्रजेयुः क्रमशः खलु ।
शास्त्रानुभूति-सम्पन्न-तत्त्वज्ञ-सम्मतं मतम् ।।९।।

यदि स्यात्पूर्वतः सिद्धा प्रकृतेर्वश्यता नृणाम् ।
अपवादस्वरूपाणां कृते नायं नयः स्मृतः ।।१०।।

कश्चिदेतत्सतीर्थ्यस्तु विवाहार्थं प्रचोदितः ।
गुरुणा, तमकृत्त्वा च सद्यो भ्रष्टोऽभवन्मुनिः ।।११।।

रोरुद्यमानमालोक्य पादपद्मनतं तु तम् ।
उवाच परमस्नेहाद् भृगुरामो यतीश्वरः ।।१२।।

'तावकोत्सो वत्स नष्टस्तपसां महतां वटो !
गुर्वाज्ञालङ्घनात्पापाज्जन्मेदं तव निष्फलम्' ।।१३।।

स्वर्णाद्रिरिव यो योगी धुर्यः सर्वक्षमाभृताम् ।
करुणावरुणाम्भोधिः वाचः पुनरुवाच सः ।।१४।।

'वटो, हन्त! तवैतत्तु जन्म यद्यपि निष्फलम् ।
आगामिनी जनिस्ते तु भविता सर्वसिद्धिदा' ।।१५।।

ऊर्णनाभ इव स्वीयकर्मजालैस्स वेष्टितः ।
विलोक्यैतद्विशुद्धस्य चिन्तातुरमभून्मनः ।।१६।।

तूर्णं गुरुपदाम्भोजमाश्रित्य विनयान्वितः ।
व्याजहार समं वस्तु स्वतपोभ्रंशशङ्कितः ।।१७।।

'तपोराशि-वशीभूत-प्रपञ्च-मञ्च-सञ्चय !
विवाह-कर्मणः पश्चात्का स्याद् मे तपसां गतिः ?।।१८।।

अरण्यानी-नदी-दुर्ग-पर्वतेष्वटतो मम ।
समयो हि महान् यातो न पुनर्लोक-वर्त्मसु ।।१९।।

लोकयात्राऽपि न ज्ञाता न वा द्रव्यार्जनं मम ।
निभृतं वसतो नित्यं संसारस्तु कथं भवेत् ?।।२०।।

भवदाज्ञावशाज्जाता ब्रह्मचर्येषु दक्षता ।
भक्षयित्त्वाऽथ तां सद्यः किं स्यात्कालक्षयेन ते ?।।२१।।

प्रत्यहं सेचनेनैव पुष्पितं फलितं तरुम् ।
छिनत्ति यदि कश्चित्तु फलं तत्सेचनेन किम् ?।।२२।।

अथ ब्रह्मचर्य-राज्येऽभिषिक्तस्य मम प्रभो !
पश्यत स्खलनं ते तु भवेदनुचितं महत् ।।२३।।

यदि नाम विवाहस्तु युक्तः स्याद् भवदाज्ञया ।
संसारे तु सुखं न स्यात्तत्र नष्टरुचेर्मम ।।२४।।

भिक्षापात्र-यज्ञ-सूत्र-जटा-वल्कलसङ्कुलम् ।
का नु मां वरयेद् वामा लतेव शुष्कपादपम् ?।।२५।।

जाते तु मामकोद्वाहे संसारं नैव पश्यतः ।
किञ्चिन्मम सुखं न स्यात्तपोहानिः परं भवेत्! ।।२६।।

ब्रह्मचर्यपरो भूत्वा दण्डी चापि ततो यतिः ।
अङ्गीकुर्वन्नथो रामामहं हास्यास्पदंध्रुवम्! ।।२७।।

विषं तपोऽसंयमिनां मूर्खाणां च गुरुर्विषम् ।
विषं लोको निर्धनस्य वृद्धस्य तरुणी विषम् ।।२८।।

हापयित्वाऽमृताम्भोधिं विषये विषजर्जरे ।
दयासिन्धो नम्रबन्धो नियोक्तुं मान्नु वाञ्छसि ?।।२९।।

तस्माद् गुरो तपश्चर्याकार्येष्वेव नियोजय ।
महदेतद्गौरवं स्यात्तवैव पूर्णशक्तिमन्!' ।।३०।।

इत्युक्त्वा तु निजं वाक्यं हृदयेन विदूयता ।
गुरोः पादाम्बुजप्रान्तेऽतिष्ठत्तूष्णीं शश्वन्मुहुः ।।३१।।

विवाहवार्ताङ्कुरोऽपि तन्मर्माणि मुहुर्मुहुः ।
सुनिर्दयं कृन्तति स्म विशिखाः सुशिखा इव ।।३२।।

भृगुरामो महायोगी वाचा स्फूर्जथुसाम्यया ।
उवाच परमस्नेहाद् हिमाद्रिरिव निश्चलः ।।३३।।

'येन निश्चयदार्ढ्येन तुभ्यं हरिहरं ददौ ।
एष तेन पथा तूर्णं विवाहं कारयिष्यति ।।३४।।

विवाहतः परं स्यात्ते तपसामुदयः सदा ।
कथं मदुक्तकार्येषु शङ्काऽऽतङ्का भवन्ति रे' ।।३५।।

इत्युक्त्वा तमथाऽऽज्ञाप्य विवाहाय मुनीश्वरः ।
विवाह-स्थल-कन्यादेः स्वयं परिचयं ददौ ।।३६।।

मन्तेश्वर-ग्रामजन्म-कालीचरण-नन्दिनी ।
यतीन्द्राङ्कसुखं लेभे देवी सा कृष्णभामिनी ।।३७।।

अहो, महाधन्यमेतज्जन्म यद् योगिशेखरः ।
गुर्वाज्ञया तपःसिद्ध्यै विवाहं निर्ममोऽकरोत् ।।३८।।

आलक्त-रूषितपदा पूर्णचन्द्र-निभानना ।
रत्नालङ्कार-शोभाढ्या केयूरवलयान्विता ।।३९।।

कौशेयवसनोद्भासा घनमेघसमाऽलका ।
सौन्दर्यवार्धिलक्ष्मीव सा रेजे कृष्णभामिनी ।।४०।।

नारायणस्य पद्मेव त्रिनेत्रस्य यथाम्बिका ।
ब्रह्मणः सापि ब्रह्माणी तस्य सा कृष्णभामिनी ।।४१।।

कपर्दस्य यथा ज्योत्स्ना कौस्तुभस्य यथा द्युतिः ।
शीतता तु जलस्येव तस्य सा कृष्णभामिनी ।।४२।।

माधवस्य यथा राधा पल्लवस्येव ताम्रता ।
गन्धवत्ता यथा भूमेस्तस्य सा कृष्णभामिनी ।।४३।।

सुधाकरस्येव कान्तिः सागरस्य यथाऽपगा ।
साधकस्य साधनेव तस्य सा कृष्णभामिनी ।।४४।।

भक्तस्य तु यथा भक्तिरभ्यासस्य क्रियात्मता ।
अनुभूतिस्तु शास्त्रस्य तस्य सा कृष्णभामिनी ।।४५।।

राजराजेश्वरी माता राजराजेश्वरी-समा ।
वधूं पुत्रानुगां दृष्ट्वा लभते स्म परां मुदम् ।।४६।।

बध्वा भ्राता सहोदर्यो महिमारञ्जनाह्वयः ।
शिष्यत्वं स गतः पश्चाद् श्यालो योगिदिवामणेः ।।४७।।

अथ पश्चात्कदाचित्तु योगिराड् श्वशुरालयम् ।
ययौ मन्तेश्वरग्राममानेतुं कृष्णभामिनीम् ।।४८।।

विवाह-समये पूर्वं तस्यालौकिकतेजसः ।
प्रकाशतां ययुर्नृणां सिद्धयः पिहिता अपि ।।४९।।

सत्यस्य वस्तुनस्तावत्प्रसिद्धिस्तु स्वतो भवेत् ।
कस्तूर्या मोदकारित्वं शपथैर्न विभाव्यते ।।५०।।

श्वसुरायतनं गत्वा योगिराजो महामहाः ।
यथाकालं कालजेता नित्यकर्माऽकरोन्मुनिः ।।५१।।

योगाऽभ्यास-वशाद्देहे दाहो बोभूयते यतेः ।
तच्छान्त्यै स्फटिकादीनि धार्यन्ते देह-पञ्जरे ।।५२।।

तत्राप्यनुदिनं योग-यागाभ्यास-क्रियारतः ।
सास्नाति चातिवारं स्म यतिर्वह्नि-समद्युतिः ।।५३।।

एकदा श्यालकेनाऽसावपराह्णे कदाऽप्यहो ।
अन्तिकस्थपुष्करिण्यां सिष्णासुः समुपाययौ ।।५४।।

सा तु पुष्करिणी लघ्वी कर्दमाक्ता मलान्विता ।
भीषणापि स्नानहेतोस्तत्रैवासौ विवेश ह ।।५५।।

सौस्नातिकः श्वशुर्यस्तु तस्थौ तूष्णीं तटे तदा ।
योगी तत्र जले भावे यथा पूर्णमलीयत ।।५६।।

अकस्मात्कारणात्कस्माज्ज्वालाऽभूत्तस्य वक्षसि ।
यतोऽभुक्तं क्षीयते न कर्म कल्पायुतैरपि ।।५७।।

अथ व्यथितचेतास्स क्लिन्नगात्रोऽहिदंशितः ।
उत्तस्थौ तु यथा हंसः सलीलं सलिलाद् यतिः ।।५८।।

श्वशुर्यस्तु तदा तस्य ददर्शावुत्तमुत्तमम् ।
मदनारिं यथा साक्षाद् द्विजिह्व-दुष्टवक्षसम् ।।५९।।

'अत्र कुत्रापि पुलिने प्रतिष्ठित-शिवालयः ।
अस्ति चेदिति'? योगीशः पप्रच्छ श्यालकं तदा ।।६०।।

स तु भीतिपरीतात्मा व्याजहारान्तिके'ऽस्ति भोः ।
शिवालयस्तवाभीष्टः शिवः पोपूज्यतेऽपि सः' ।।६१।।

इति तस्य वचः श्रुत्त्वा दृष्ट्वाऽऽत्मकर्मणो गतिम् ।
उवाच श्यालकं वाक्यं गम्भीरीभूय योगिराट् ।।६२।।

'एतद्भोगिदंशनोत्थ-विष-प्रभाव-मुक्तये ।
मन्दिरेऽत्र क्रियां कर्त्तुं काङ्क्षनापि विशाम्यहम् ।।६३।।

आगच्छामि बहिर्नात्र यावत्कालमहं स्वयम् ।
कथञ्चित्कोऽपि कस्मात्तामर्गलां न विमोचयेत्' ।।६४।।

इत्युक्त्वा तरसा श्यालं योगिराट् सर्वकर्मवित् ।
विवेश मन्दिरस्यान्तो विषापनयनाय सः ।।६५।।

स तु सर्वानचकथदावुत्तो मे महान् व्रती ।
सिसाधयिषुरीशं तन्मन्दिरं प्रविवेश ह ।।६६।।

यावत्कालं स्वयं सोऽथ बहिर्नायात्यलौकिकः ।
तावत्कालं मन्दिरस्य मोक्तव्या नार्गला समैः ।।६७।।

गते महति कालेऽथ विशुद्धानन्द-योगिराट् ।
स्वीय-क्रिया-बलात्तूर्णं विषतः स्वं ह्यमोचयत् ।।६८।।

चक्षुषी पाटले तस्य देहे योगभवोष्णता ।
वीतविषप्रभावश्च योगिराड् ददृशे जनैः ।।६९।।

प्रफुल्ल-कमलास्यश्रीर्विष्णू रेजे यथा यतिः ।
भृगुपादसुन्दरेण दन्तचिह्नेन वक्षसा ।।७०।।

इतः पश्चात्स आनीय भामिनीं कृष्णभामिनीम् ।
गुरूपदिष्ट-मार्गेण तपस्यासु रतोऽभवत् ।।७१।।

तस्य तपःसिन्धुबन्धोर्यतेः सर्वजगद्गुरोः ।
संसाराऽनुगतस्याभूदेतद्गौरववर्धनम् ।।७२।।

राजराजेश्वरी माता बध्वां दृष्ट्वाऽरतं सुतम् ।
तपःप्रभाव-शुद्धं तं चिन्तयामास सा पुनः ।।७३।।

भामिन्याः कृष्णभामिन्याः ज्ञात्वा तत्पूर्वजन्मजम् ।
तस्यामसक्त एवासीज्ज्ञाता यः सर्वजन्मनाम् ।।७४।।

अथ मात्रा स्मृतस्तूर्णं भृगुरामो महाव्रतः ।
आजगाम वण्डुलं तं सदागतिरिवाम्बरम् ।।७५।।

ज्ञात्त्वा तु विषयं कृत्स्नं विशुद्धानन्दयोगिनम् ।
आजुहाव ततस्तूर्णमवदद्दत्तशासनः ।।७६।।

यया महामनस्विन्या लब्धस्तु त्वादृशः पतिः ।
नूनं सा त्वां स्वसंस्कारैरतिशेतेऽसमव्रतम् ।।७७।।

इत्युक्तो गुरुणाऽनेन विज्ञाय विषयं समम् ।
ततः परं स्वभामिन्यामात्मारामोऽप्यरीरमत् ।।७८।।

क्रमशस्तु बभूवास्यां दुर्गादासः सुतोऽतुलः ।
ततो विष्णुपदो मध्यः कन्या विश्वेश्वरी च सा ।।७९।।

आद्यस्तु माधवानन्दः पूर्वजन्मन्यभूद् यतिः ।
पञ्चमुण्डासनं यस्य तत्रासीत्साधनास्थलम् ।।८०।।

विशुद्धानन्दनाथोऽपि दैनन्दिन्यां तदाऽलिखत् ।
माधवानन्द-योगीन्द्रः पत्न्या गर्भमशिश्रियत् ।।८१।।

अथ गच्छत्सु कालेषु शिवस्य स्थापनाऽभवत् ।
भृगुरामाज्ञया तूर्णमकारयदसौ यतिः ।।८२।।

अनिन्द्यानन्द-सन्दोहं विन्दु-वृन्द-सुवन्दितम् ।
मन्दिरं चन्द्रमौलेस्तु वण्डुलेश्वरनामकम् ।।८३।।

मञ्जरी-मञ्जीर-मञ्जु-गुञ्जद्भृङ्गालि-शिञ्जितैः ।
हरिद्वर्ण-पर्ण-पूर्ण-भा-भासित-हरिन्मुखैः ।।८४।।

तुलसी-पादपैः पुष्पैर्विविधैः पुष्पितैर्मुहुः ।
मन्दिरं रुचिरं जातं गुहास्थान-विभूषितम् ।।८५।।

भैरव्यः साधवः सिद्धा योगिनश्च कुमारिकाः ।
सन्न्यासिनो दण्डिनश्च यान्त्यायान्ति यदा कदा ।।८६।।

सरसा मधुरा हृद्या सुवर्णा च मनोहरा ।
पद्मावलीव कविता पुष्करिण्यां स्म राजते ।।८७।।

अथोत्सवसमारम्भः सुमहांस्तत्र चाऽभवत् ।
वण्डुलेशस्थापनैवमभूद् गुर्वाज्ञया यतेः ।।८८।।

अथास्य योगिराजस्य भामिनी कृष्णभामिनी ।
चर्वयन्ती नागवल्लीं परिहासातिविह्वला ।।८९।।

प्रातरेव समुत्थाय गच्छति स्म सखीवृता ।
पुष्करिण्यास्तटं स्नातुं प्रत्यहं सा हि लीलया ।।९०।।

कदाचिदथ गच्छन्त्याः स्नातुं तस्याः सरोवरम् ।
चर्वयन्त्या नागवल्लीं निष्ठीवं समजायत ।।९१।।

वण्डुलेशमन्दिरस्य कुड्ये सौधपरिष्कृते ।
निष्ठीवन्त्या अजानन्त्या चिह्नं लग्नमभूच्च तत् ।।९२।।

विशुद्धानन्दनाथस्तु यदा तारकितं नभः ।
तदैवोत्थाय शय्यातः स्नातुं याति स्म कालवित् ।।९३।।

परावर्तनवेलायां लक्ष्मैतत्स ददर्श हि ।
बुधेशो बुबुधे तूर्णं कस्यास्तत्कर्म मर्मकृत् ।।९४।।

स गृहं तु परावृत्य राजराजेश्वरीं प्रसूम् ।
मन्दिरे दर्शयामास लग्नं लक्ष्म सुदारुणम् ।।९५।।

'मन्दिरं दृश्यते मातः! हन्त, निष्ठीवरञ्जितम् ।
सुधाकरे कलङ्कस्तु सौधे तल्लक्ष्म दृश्यते ।।९६।।

वधूं भक्तिमतीमेनां तथा शाधि यथा स्वयम् ।
क्षालयेदचिराद्भित्तिं शिवकोपोऽन्यथा भवेत्' ।।९७।।

आगतायां स्नुषायां सा श्वश्रूः पुत्रेरितं वचः ।
उवाच तां साऽपि दृष्ट्वा कर्म स्वं लज्जिताऽभवत् ।।९८।।

अथ सा खिन्नमनसा हृदयेन विदूयता ।
ममार्ज यत्नतो भित्तिं वण्डुलेश-गृहस्य ताम् ।।९९।।

हस्ताभ्यां तूर्णमानीय पानीयं कृष्णभामिनी ।
पङ्कजाभ्यामिव तदा पत्यनुज्ञानुवर्तिनी ।।१००।।

दृष्ट्वा कुड्यं मन्दिरस्य प्रक्षालितमभूदिति ।
माता, विशुद्धानन्दश्च मुमुदाते, वधूश्च सा ।।१०१।।

तद्दिने तु महायोगी क्रियारक्तो महानिशि ।
स्वालये सह पुत्रैश्च सुप्ता सा कृष्णभामिनी ।।१०२।।

सहसा हि वीतनिद्रा सा ददर्श भयाकुला ।
गृहमध्ये स्थितं भीमं पुरुषं तं भयप्रदम् ।।१०३।।

रूक्षेक्षणं दीर्घशुष्कपीतकेशं महाभुजम् ।
दण्डपाणिं विशालास्यं लौहगात्रं स्थितं पुरः ।।१०४।।

ताडयन्तं च दण्डेन तस्या भीतिस्तदाऽभवत् ।
अतिभीता तदा नाथमाजुहाव तपस्विनी ।।१०५।।

योगी तु सहसाऽऽगत्य विलोक्य तत्र पूरुषम् ।
बुबोध सर्वं सर्वज्ञो ध्यानस्तिमितलोचनः ।।१०६।।

बण्डुलेश-मन्दिरस्य भित्तावुच्छिष्टलेपनात् ।
शिवस्य भैरवः क्रुद्धः शासितुं तां स आगतः ।।१०७।।

'कुड्यं यदि पुनर्जातमुच्छिष्टं ते न रक्षणम् ।'
मुहुर्मुहुर्व्याहरन्तं दृष्ट्वा क्रुद्धं तु भैरवम् ।।१०८।।

योगिनाथः समर्थस्तु गेहाद् गन्तुमथादिशत् ।
व्याजहार यदा योगी वारं वारं वचः स्वकम् ।१०९।।

कथञ्चित्तु महाक्रुद्धो भैरवोऽगाद् गृहात्ततः ।
सा तं दृष्ट्वा स्वकान्तेन शासितं मुदिताऽभवत् ।।११०।।

चौरः कोऽपि भवेदिहागत इति ज्ञात्त्वाऽथवा तस्करः
किं वा लुण्ठक एव कश्चिदसकौ भीताऽभवद् भामिनी ।
शैवो भैरव एष इत्यथ रहस्यं नैवं बुद्धं तया
दृष्ट्वाऽतः परमेव सुप्ततनयान् सुप्ताऽभवत्सा तदा ।।१११।।

तत्पश्चाद् यतिशेखरोऽपि निरतोऽभूत्साधनायामहो
गार्हस्थ्यं परिपालयन्नपि यतेर्नाऽऽसक्तिरासीद् गृहे ।
पश्चाद् यो जगदीशचन्द्रवसुनामाथाऽऽजगाम स्वयं
वृतान्तः किल काव्यशास्त्ररसिकैः श्रव्यः स एतत्परम् ।।११२।।

अत्र श्रीकविराजराजिमुकुटालङ्कारहीरप्रभा-
गोपीनाथकृपाकटाक्षविगलत्पीयूषविश्रान्तिभूः ।
योऽयं श्रीमनुदेव एष समभूत्तस्य प्रबन्धेऽधुना
सर्गःश्रीलविशुद्धवैभवमहाकाव्ये स एकादशः ।।११३।।

*।।इति श्रीवीणापाणिदेवीपशुपतिभट्टाचार्यसुतमनुदेवभट्टाचार्यविरचिते विशुद्धवैभवे महाकाव्ये एकादशः सर्गः ।।*



# विशुद्धवैभवं महाकाव्यम्

## द्वादशः सर्गः

विवाहितो लोकहितोत्सवश्री-
गृहस्थ-धर्मं गुरुवाक्यवश्यः ।
मेने मनस्वी मनसा समस्तं
तपःप्रभावोज्झित-रागरागः ।।१।।

श्वैत्येक-गेहं ननु गाङ्गमम्भः
स्यात्कज्जलाभं यदि यामुनं वा ।
उन्मज्जतो मज्जत एव तत्र
वपुर्मरालस्य तथैव भाति ।।२।।

सरोजपत्रं तु यथा जलौघै-
र्वसत्पयस्येव न लिप्यते तद् ।
एवं स योगी रमणी-सहायो
युतस्स्वपुत्रैः समयं निनाय ।।३।।

यः प्रत्यहं निश्चितकाल एव
मध्येनिशं प्रोज्झित-नैजशय्यः ।
न्यक्कृत्य शीतादि-ऋतु-प्रभावं
स्व-साधना-ध्यानपरो बभूव ।।४।।

उत्थाय नक्तं क्षणमर्मवेत्ता
गत्वा सरोजावलि-पुष्करिण्याम् ।
प्रविश्य पाथः सलिलाक्तकेश-
स्तस्थौ जले, मौक्तिकवत्पयोधौ ।।५।।

यमे यतो यो नियतेर्नियन्ता
स्थित्त्वा चिरायाम्भसि दीर्घिकायाः ।
समुद्गतः स्नेहविशुद्धगात्रः
सहस्रपत्रं तु यथा यतीन्द्रः ।।६।।

समेत्य गेहं सरसीतटीतः
स्व-साधनाऽऽगारमरं प्रविश्य ।
द्वारं पिधाय प्रणिधाय कायं
संसाधयामास निजव्रतं सः ।।७।।

आयम्य वायून् स निजेष्टदेशं
यावद्वशीभूत-समस्त-भूतः ।
प्रकृत्य तत्कुम्भकरेचकादि
कृत्यं ययौ यः कृतकृत्यतां तु ।।८।।

तस्थौ तपस्याऽऽकरगुष्करायां
यदा स योगी समहेमलोष्टः ।
द्वौ भोगिनौ तस्य गृहे तदास्तां
सान्निध्यहेतोस्तु विनीतचित्तौ ।।९।।

एतन्न चित्रं खलु तस्य पार्श्वे
हिंसां विहायैव सरीसृपास्ते ।
आसन्तु चान्द्रीलसितस्य सर्वेऽ-
हिंसाप्रतिष्ठस्य यतीश्वरस्य ।।१०।।

कदाचिदासीदपि शीतकाले
योगक्रियाऽभ्यासपरीतचेताः ।
व्याघ्रादिकानां समजे तदङ्के
शेते स्म योगी स तु निर्विशङ्कः ।।११।।

योगक्रियाऽभ्यासरतो यतीन्द्रः
किं किं करोतीति च शङ्कितस्तु ।
ज्ञातुं हि कश्चिद् चपलान्तरात्मा
तच्चेष्टितं सर्वमसाावियेष ।।१२।।

अथो नियुक्तः खलु तेन कश्चित्
कदाचिदेको निभृतं ययौ सः ।
तत्साधनागारमथ प्रवेष्टुं
कपाटयुग्मं पिहितं ददर्श ।।१३।।

बलात् समुद्घाटयितुं कपाटं
स चेष्टयामास पुनः पुनस्तु ।
न कीलकं चार्गलया निबद्धं
तच्चेष्टया तद्विवृतं बभूव ।।१४।।

अहो, तदाश्चर्यमयं बभूव
तत्तेजसा मूर्च्छित एव सद्यः ।
पपात सोऽयं सहसा तदैव
सोढुं नहि प्राभवदेष किञ्चित् ।।१५।।

दृष्ट्वा प्रभावाद्भुतवैभवाढ्य-
ज्योतिस्समूहालिपरीतमेनम् ।
चक्षुस्तदीयं पिहितं बभूव
शशाक न द्रष्टुमतो न किञ्चित् ।।१६।।

पश्चात् समुत्थाय च साधनातः
ज्ञात्वाऽथ सर्वं विहितं च तेन ।
ततः परं कीलक एव नित्यं
कृत्वाऽर्गलां यः स्वविधिं चकार ।।१७।।

आसीत्तदानीमिह भारतेऽस्मिन्
वसूपनामा जगदीशचन्द्रः।
वैज्ञानिकेन्द्रः खलु भक्तियुक्तः
शुश्राव यो योगिचरित्रमत्र ।।१७।।

वैज्ञानिकेन्द्रो भुवि सोऽपि धन्यो
यः प्राणंवत्तां हि वनस्पतीनाम् ।
संसाध्य नूनं जगतीतलेऽस्मिन्
श्रीभारतीयार्षविधिं व्यतानीत् ।।१८।।

'हा प्राणवत्ताऽपि वनस्पतीना'-
मासीत्तदानीमुपहासपात्रम् ।
परन्तु सत्यापितमेव येन
यन्त्रेण सोऽयं जगदीशचन्द्रः ।।१९।।

'वनस्पतिः प्राणधरोऽस्ति नूनं'
वादस्तु यन्त्रैरथ साधितोऽभूत् ।
स्वनिर्मितैर्हन्त जगत्समक्षं
चकास्ति सोऽयं जगदीशचन्द्रः ।।२०।।

आविष्कृतं योगिवरेण तेन
श्रीसूर्यरश्मेस्तु पदार्थजातम् ।
श्रुत्वाऽखिलं श्रीजगदीशचन्द्रः
सेयेष बोद्धुं तरसा मनस्वी ।।२१।।

कदाचिदेषोऽत्र यतीश्वरस्य
गेहं जगाम स्वयमेव विद्वान् ।
परं तदानीमभवत्तु सायं
स्वसाधनाध्यानरतोऽभवत्सः ।।२२।।

तदीयशिष्यान्यतमस्तु कश्चिद्
बहिस्स्थितोऽभूद् गुरुलग्नचित्तः ।
ददर्श भक्तो जगदीशचन्द्रो
वैज्ञानिकप्राकृतिकप्रवीणः ।।२३।।

स तं प्रणम्य प्रणिधाय कायं
वनस्पतिप्रांणप्रतिष्ठयादृतः ।
समाधिसिन्धूर्मिरतं विशुद्धा-
नन्दं हि विज्ञानविशुद्धबुद्धिम् ।।२४।।

द्वारि स्थितं तत्र तदीयशिष्यं
समस्तविज्ञानपरिष्कृतार्थम् ।
पप्रच्छ दृष्ट्वा जगदीशचन्द्रः
श्रीसूर्यविज्ञानगतं रहस्यम् ।।२५।।

'कथं भवेद् हन्त पदार्थसृष्टिः
श्रीसूर्यरश्मिभ्य इहैव सद्यः ?
कुर्वन्ति भूयो गुरवस्त्वदीयाः
प्रत्यक्षबोधाय समागतोऽहम्' ।।२६।।

श्रुत्वा तदुक्तं वचनं विनीतं
'जिज्ञासुरेषोऽस्त्यधिकारि एव ।'
मत्वा प्रकामं च तदीयकर्म
प्रदेयमस्मायिति निश्चिकाय ।।२७।।

गुरुं च बुद्ध्वा भवनान्तरेऽस्मिन्
महासमाधीन्दुविभावभासम् ।
जिज्ञासुमेनं जगदीशचन्द्रं
निर्णीय तूर्णं स उवाच वाचम् ।।२८।।

'आविष्कृतप्राणवनस्पते हे
विज्ञानबुद्धे जगदीशचन्द्र !
जिज्ञासयाऽऽकृष्टमतिर्भवान् यत्
समागतः स्वागतमस्तु मस्तु ।।२९।।

श्रीभारतीयै ऋषिभिः प्रगीतं
विज्ञानजातं हि पुरा प्रयुक्तम् ।
भ-भूमि-वास्सूर्य-समीरणाना-
मवेहि तत् प्राकृतिकं समस्तम् ।।३०।।

अस्मद्गुरुस्तत्र समत्र विद्या-
स्वशेष-वैदुष्य-विभूष्यमाणः ।
परं स सन्ध्यानिरतोऽस्ति सद्य-
स्ततो न तद्दर्शनमस्ति लभ्यम्' ।।३१।।

तेनेरितं वाकमसौ समस्तं
श्रुत्वाऽभवत् खिन्नमना मनाग्यः ।
अवादि भूयोऽपि नतेन तेन
'हा हन्त दुर्दैवमहो महन्मे ।।३२।।

श्रीभारतीयै ऋषिभिः पुराणै-
र्नूनं पुरैवाविरकारि सर्वम् ।
विज्ञानजातं प्रकृतिप्रसक्तं
विश्वास एषोऽस्ति मम द्रढीयान् ।।३३।।

अहं जनन्या शिशुरेवमुक्तः
'प्राणास्तु सन्त्येव हि सर्ववृक्षे' ।
विश्वस्य सर्वं मयकाऽत्र पश्चात्
तत्सिद्धये हन्त कृतः प्रयासः ।।३४।।

यन्त्राणि निर्माय तदेदृशानि
विश्वस्थवैज्ञानिकसत्समाजे ।
परीक्ष्य सर्वं पुरतस्तु तेषां
प्रदर्शितं तत्त्वमिदं समग्रम् ।।३५।।

तदार्षविज्ञानविधिर्यतीन्द्रै-
राविष्कृतः प्राकृतिकस्तु सद्यः ।
अन्विष्य भूयो जगति प्रकामं
श्रुतं मया सर्वजनाननेभ्यः ।।३६।।

इच्छाम्यहं द्रष्टुमहो महोऽद्य
वैज्ञानिकं तत्त्वमिदं स्वनेत्रैः ।'
निवेद्य नम्रो जगदीशचन्द्रो
वैज्ञानिकेन्द्रः प्रकृतिप्रियोऽसौ ।। ३७।।

शिष्यः स सर्वं हि विचार्य तत्त्वं
तूष्णीं बभूवाखिलसिद्धिसिद्धः ।
वैज्ञानिकेन्द्रस्य हृदं विलोक्य
विश्वस्य चैनं समुवाच वाचम् ।।३८।।

'जिज्ञासितं यत्तु समाहितं चेद्
गुरोः सकाशात्प्रभवेद् वरं तत् ।
तदीयसन्ध्यासमये भवांस्तु
समागतः किं करवाणि हन्त !।।३९।।

'परं वृथा नैव समागमस्ते
भविष्यतीहेति' भृशं विबोध्य ।
विलोकयामास गभीरदृष्ट्या
स दिक्षु सर्वासु यतीन्द्रशिष्यः ।।४०।।

नासीत्तदानीं प्रतिराजमार्गं
विद्युद्व्यवस्थाविधिरत्र देशे ।
स्तम्भेषु सर्वेषु स्थितान् नियुक्तः
सायं सदा ज्वालयति स्म दीपान् ।। ४१।।

आसन्नमासीत्तु तदैव सायं
प्रज्वालिता नो सकलाः प्रदीपाः ।
विलोक्य चैतद्यतिराजशिष्यः
चमत्कृतिं काञ्चन साचचार ।।४२।।

प्रज्वालितं सम्प्रति स प्रदीप-
मेकं भृशं यो निपुणं विलोक्य ।
अज्वालितान् तानितरान् प्रदीपान्
प्रज्वालयामास निजस्य दृष्ट्या ।।४३।।

प्रज्वालितादेकतमप्रदीपाद्
आकृष्य वह्निं क्रमशस्तथान्यान् ।
अज्वालयद् लोचनरश्मिभिस्तु
शिष्टान् समस्तानपि यः प्रदीपान् ।।४४।।

महाचमत्कारमहोमयं तत्
प्रत्यक्षमेतत् पुरतो विलोक्य ।
प्रत्यक्षमात्रैकप्रमाणवादी
ननाम भक्त्या जगदीशचन्द्रः ।।४५।।

अनेकसम्भारदृढानुबद्धं
पाश्चात्त्यविज्ञानमिदं विभाति ।
निष्कारणाविष्करणैकलभ्यं
तदार्षविज्ञानमिदम्विवेकः ।।४६।।

तदाश्रुपूर्णाकुलनेत्रपद्मः
प्रणत्य भूयो यतिराजशिष्यम् ।
प्रत्यक्षहेतोरखिलं विविच्य
कृती ययौ श्रीजगदीशचन्द्रः ।।४७।।

यो वेदविज्ञानमतिस्तु विद्या-
वाचस्पतिश्रीमधुसूदनाख्यः ।
सुश्राव 'सृष्टिं परमाणुतस्तु
योगीश्वरः कश्चिदसौ विधत्ते' ।।४८।।

स तूर्णमागत्य यतीश्वरस्य
पादद्वयाम्भोरुहदेशमूलम् ।
पप्रच्छ नम्रः प्रणिपत्य मूर्ध्ना
वेदार्थवैज्ञानिक एष किञ्चित् ।।४९।।

'वेदार्थविज्ञानविधौ मयाऽऽप्तं
सृष्टिक्रिया भास्कररश्मिभिस्तु ।
न पारयाम्यत्र विधातुमाहो
प्रत्यक्षमेतत् सुधियां समाजे ।।५०।।

विश्वास एषोऽस्ति दृढो मदीयान्
प्रमाणिता चापि यथार्थतास्य ।
प्रत्यक्षमेतस्य विलोकनाय
श्रीमत्पदाब्जं शरणागतोऽहम् ।।५१।।'

आकर्ण्य सर्वं च विलोक्य चैनं
वेदार्थविज्ञानसमाढ्यचित्तम् ।
स सूर्यविज्ञानबलात्समक्षं
विदर्शयामास च सृष्टिविद्याम् ।।५२।।

ऋषिप्रणीतार्थविकासकं त-
माशीर्वचोभिश्च विभूष्य भूयः ।
प्रसन्नचेता यतिराडमुष्मै
वेदार्थविज्ञानविदे मुमोद ।।५३।।

अस्मद्गुरुः साधनसिद्धगोपी-
नाथाभिधःपण्डितमण्डलेन्दुः ।
समस्तशास्त्रोदितरत्नमाला-
सुमेरुरेष प्रतरां चकास्ति ।।५४।।

तन्त्रार्थसाक्षात्करणव्रताढ्यो
वेदोक्तविज्ञानविनिश्चितार्थः ।
अतीत्य कालं समुपासनाक्तः
शिरस्सहस्राम्बुजभृङ्ग एषः ।।५५।।

पूर्णाभिषेकेण स दीक्षितोऽभूद्
यो मान्यमान्योऽप्यथ मानिमान्यः ।
कालं विजेतुं तपसा विशुद्धा-
नन्देन तेनात्र यतीश्वरेण ।।५६।।

शास्त्रार्थसाक्षात्करणैकहृष्टो
याथार्थ्यवेत्ताऽथ परापरज्ञः ।
श्रीश्रीगुरुर्मे करुणापरीतो
मां काव्यबन्धाय स आदिदेश ।।५७।।

जगद्गुरुः सोऽपि यतीश्वरस्तु
बहुत्र संस्थाप्य शुभाश्रमांस्तान् ।
ततश्च काश्यामपि तं विशुद्धा-
नन्दाभिधं काननमाचकार ।।५८।।

स्वसिद्धिवर्यैर्नवमुण्डनाम्नाऽऽ-
प्याविष्कृतस्यास्य महासनस्य ।
प्रतिष्ठया ज्ञानमयीह काशी
विज्ञानतस्तेन विभूषिताऽभूत् ।।५९।।

श्रीसूर्यविज्ञानमहाविधेस्तु
काश्यां तदैवाध्ययनार्थमत्र ।
प्रासादपृष्ठस्थमहाप्रकोष्ठे
यन्त्रादिकञ्चापि मुदा प्रणीतम् ।।६०।।

'परं तथात्राऽनधिकारिभिस्तु
ज्ञातं तदानर्थकरं ध्रुवं स्यात्' ।
इत्याज्ञया तेन निषिद्धमेतद्
श्रीज्ञानगञ्जाश्रमतापसानाम् ।।६१।।

अद्याप्यहो तानि समानि हन्त
यन्त्राणि सन्त्येव हि तत्प्रकोष्ठे ।
'असूयकायानृजवे' हि वाक्याद्
विद्यास्ति देयाऽत्र न तादृशे हि ।।६२।।

गोपालबालः खलु खेलतीह
स्वैश्वर्यराशिं स विहाय नित्यम् ।
एकत्र तत्रैव हि योनिपीठे
शिवाः शतं सन्ततमारमन्ते ।।६३।।

ये दीक्षिता योगिवरेण पूर्वं
तद्वंशजाश्चाप्युभयेऽभयाढ्याः ।
शिवप्रतिष्ठामिह योनिपीठे
कर्तुं स्वभक्त्या ननु शक्नुवन्ति ।।६४।।

तत्रास्ति दुर्गाप्रतिमातिभव्या
या पूज्यते प्रत्यहमेव भक्त्या ।
श्रीमद्गुरूणामपि शैलमूर्तिः
चकास्त्यहो आश्रमदेश एव ।।६५।।

अस्मद्गुरुर्यो दशवर्षकालं
शवासनेन स्वकमायुरत्र ।
अवर्धयत् स प्रतिवत्सरं तु
दुर्गोत्सवे स्वस्थ इह स्थितोऽभूत् ।।६६।।

योगाधिराजनलिनीमिहिरो विशुद्धा-
नन्दश्चकार बहुधा विविधास्स लीलाः ।
यो दर्शयां प्रथममास च नाभिपद्मं
भूयः पुरेव हि पुराणगतेतिवृत्तम् ।।६७।।

छात्रेण तेन हि सता मयकैव पूर्वं
यस्याज्ञया विरचितं ननु काव्यमेतत् ।
सम्पूर्णशास्त्रगतयोगविदं हि गोपी-
नाथाभिधं गुरुवरं प्रणतोऽस्मि भूयः ।।६८।।

राजारामस्य वैयाकरणमृगपतेर्योऽस्ति पौत्रः कनिष्ठो
वीणापाणौ तथा श्रीपशुपतिबुधतो लब्धजन्मा द्विजो यः ।
सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयीयो-
पाचार्यः काव्यमेतत्त्वकृत स मनुदेवाऽभिधानोऽधिकाशि ।।६९।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषयूषश्रयः ।
एष श्रीमनुदेवनामककविस्तस्य प्रबन्धेऽधुना
सर्गश्चारुविशुद्धवैभवमहाकाव्येऽभवद् द्वादशः ।।७०।।

वीणापाणिरभूत् सतीमणिरलं माता यदीयार्चिता
नित्यध्यानवशाद् य आविरकरोच्छ्रीव्यासकूटं मुदा ।
शीलाम्भोजदिवस्पतिः पशुपतिस्तातो यदीयो मतः
सोऽयं श्रीमनुदेव एष च महाकाव्यं व्यधत्तादरात् ।।७१

सत्पुत्रत्रयपाठितामरवचश्श्रीगौरवैकास्पदं
पुत्र्यस्ताः सकलाश्च येन सततं ताः पाठिताः संस्कृतम् ।
राराष्टि स्म यदीयचित्तकमले श्रीमन्महाभारतं
वीणापाणिसमेधितः पशुपतिस्तातो जयत्यालयम् ।।७२।।

*।।इति श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयाधीतशास्त्र-तत्रत्यवेदवेदाङ्ग-संकायान्तर्गतव्याकरणविभागीयोपाचार्य-श्रीश्रीमन्महामहोपाध्याय-पण्डितगोपीनाथकविराजकृपाकटाक्षसमासादितरचनाप्राचुर्य-चातुर्य-श्रीवीणापाणिदेवीपण्डितपशुपतिभट्टाचार्यकनिष्ठ-सुत-मनुदेवभट्टाचार्यव्याकरणाचार्यव्याकरणकेशरि-शास्त्रभूषण-शास्त्रार्थमहारथविरचिते विशुद्ध-वैभवे महाकाव्ये द्वादशः सर्गः ।।*

।। सम्पूर्णमिदं महाकाव्यञ्च ।।



## परिशिष्टम्-क

# छान्दसङ्किञ्चित्

| | सर्गः | श्लोकः | छन्दः |
|---|---|---|---|
| १. | प्रथमः | प्रथमः | समवृत्तम्, अनुष्टुब्जातिकम्। |
| २. | ,, | द्वितीयः | प्रकृतिजातिकं प्रतिपादमेकविंशत्यक्षरात्मकं समवृत्तं स्रग्धराच्छन्दः, तल्लक्षणं यथा—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति। |
| ३. | ,, | तृतीयात् चतुस्त्रिंशं यावद् द्वाविंशतिः श्लोकाः | अत्यष्टिजातिकं प्रतिपादं सप्तदशाक्षरात्मकं शिखरिणीनामकं समवृत्तम्, तल्लक्षणं यथा—'रसै रुद्रैश्छिन्ना य-म-न-स-भ-ला-गः शिखरिणी' इति। |
| ४. | ,, | पञ्चत्रिंशः | अतिधृतिजातिकं प्रतिपादमूनविंशत्यक्षरात्मकं मेघविस्फूर्जिताख्यं समृवत्तम्, तल्लक्षणं यथा—'रसर्त्वश्वैर्य्मौन्सौ र-र-गुरुयुतौ मेघविस्फूर्जिता स्यात्' इति। |
| ५. | ,, | षट्त्रिंशः | उक्तविशेषणास्पदं शार्दूलविक्रीडितं छन्दः; तल्लक्षणं यथा—'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति। |
| ६. | ,, | सप्तत्रिंशः | तार्तीयीककोटावुक्तम्। |
| ७. | ,, | अष्टात्रिंशोनत्रिंशौ | तुरीयकोटावुक्तम्। |
| ८. | ,, | चत्वारिंशतस्त्रिचत्वारिंशं यावत् | षष्ठ्यां कोटावुक्तम्। |
| ९. | ,, | चतुश्चत्वारिंशः | अतिशक्वरीजातिकं प्रतिपादं पञ्चदशाक्षरात्मकं समवृत्तं मालिनीनामकं वर्णच्छन्दः, यथा—'न-न-म-य-य-युतेयं मालिनी भोगिलोकैः' इति। |
| १०. | ,, | पञ्चचत्वारिंशः | पञ्चम्यां कोटावुक्तम्। प्रतिसर्गान्तं ध्यातव्यम्। |

| सर्गः | श्लोकः | छन्दः |
|---|---|---|
| ११. द्वितीयः | प्रथमतो द्वात्रिंशं यावत् | शर्करीजातिकं प्रतिपादं चतुर्दशवर्णात्मकं वसन्ततिलकाख्यं समवृत्तं वर्णच्छन्दो यथा—'उक्ता वसन्ततिलका तभजा जगौ गः' इति। |
| १२. ,, | त्रयस्त्रिंशः | चतुर्थकोटावुक्तम्। |
| १३. ,, | चतुस्त्रिंशतः पञ्चपञ्चाशं यावत् | एकादश्यां कोटावुक्तम्। सैतवाचार्यमते 'सिंहोन्नता'-नामकमेतत्, तदुक्तम्—'सिंहोन्नतेयमुदिता मुनि-सैतवेन' इति। |
| १४. ,, | षट्पञ्चाशः | द्वादशीं कोटिमनुहरति। |
| १५. ,, | सप्तपञ्चाशतः षट्षष्टिं यावत् | सिंहोन्नता/वसन्ततिलका, लक्षणमुक्तम्। |
| १६. ,, | सप्तषष्टः | शिखरिणी, लक्षणजात्याद्युक्तम्। |
| १७. ,, | ततो द्वौ | सिंहोन्नता वसन्ततिलका वा। |
| १८. ,, | सप्ततितमः | शार्दूलविक्रीडितम्, विवरणमुक्तम्। |
| १९. ,, | एकसप्ततः | त्रिष्टुब्जातिकं प्रतिपादमेकादशाक्षरात्मकं समवृत्त-मिन्द्रवज्राख्यं वर्णच्छन्दः, यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति। |
| २०. तृतीयः | प्रथमतः सप्तदशं यावत् | अत्यष्टिजातिकं प्रतिपादं सप्तदशाक्षरात्मकं मन्दाक्रान्ताख्यं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' इति। |
| २१. ,, | अष्टादशः | प्रथमचरणे धृतिजातिकं प्रतिपादमष्टादशाक्षरात्मकं चित्रलेखाख्यं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—'मन्दाक्रान्ता नयुगलजठरा कीर्तिता चित्रलेखा' इति। अन्यत्र मन्दाक्रान्ता, तज्जात्याद्युक्तम्। तदेवमत्र चित्र-लेखामन्दाक्रान्तामेलनादुपजातिच्छन्दः, तदुक्तम्-'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम।' अत्र भिन्नजात्योर्मेलनाद् मिश्रोपजातिरिति समयः। (द्र.भागवतम्, विद्याहितनिधिसभा(गुर्जर)प्रकाशितम्, दशमस्कन्धपूर्वार्धप्रारम्भः।) |

| सर्गः | श्लोकः | छन्दः |
|---|---|---|
| २२. तृतीयः | द्वौ | मन्दाक्रान्ते उक्ते एव। |
| २३. ,, | एकविंशाद् ,, षट्पञ्चाशं यावत् | शार्दूलविक्रीडितम्, विवरणमुक्तम्। |
| २४. ,, | ततो द्वौ; एकषष्ट-द्वाषष्टत्रिषष्टीर्विहाय सर्गान्तं यावत् | तेषु च यथाक्रमं मन्दाक्रान्ता-मालिन्यौ शार्दूल-विक्रीडितञ्चेति सर्वमुक्तम्। |
| २५. चतुर्थः | आद्यादेकादशं यावत् | मन्दाक्रान्ता। |
| २६. | द्वादशः | शार्दूलविक्रीडितम्। |
| २७. ,, | ततः पञ्चदशं यावत् | जगतीजातिकं प्रतिपादं द्वादशाक्षरात्मकं द्रुत-विलम्बिताख्यं समवृत्तं वर्णच्छन्दः, तथा हि— 'द्रुतविलम्बितमाह नभौ भरौ' इति। |
| २८. ,, | द्वौ | मन्दाक्रान्ते। |
| २९. ,, | अष्टादशः | अष्टाविंशमनुहरति। |
| ३०. ,, | ऊनविंशः | इदं सुन्दरीनामकमर्धसमवृत्तं वर्णच्छन्दः, तदुक्तम्— 'अयुजोर्यदि सौ जगौ युजोस्सभराल्गौ यदि सुन्दरी तदा।' इति। समवृत्ताभावात्प्रतिपादं लक्षणैक्यं नो, अत्र विषमौ समौ च पादा लक्षणे अनुहरन्ति। |
| ३१. ,, | ततस्त्रयः | सिंहोन्नता। |
| ३२. ,, | त्रयोविंशतो द्वाचत्त्वारिंशं यावत् | सुन्दरी, पूर्वमेव पूर्णं विवृता। |
| ३३. ,, | द्वौ | 'रात्परैर्नरलगै रथोद्धता' इति, अन्यद्विवृतम्। |
| ३४. ,, | ततस्त्रयः | सिंहोन्नता, विवरणीयं विवृतम्। |
| ३५. ,, | अष्टाचत्वारिंशतो द्वापञ्चाशं यावत् | 'अयुजि नयुगरेफतो यकारो युजि तु नजौ ज-र-गाश्च पुष्पिताग्रा' इति लक्षणाक्रान्तं पुष्पिताग्रा-ख्यमर्धसमं वृत्तम्। अन्यदुक्तम्। |
| ३६. ,, | त्रिपञ्चाशः | वसन्ततिलका, पूर्वं विवृता। |
| ३७. ,, | ततौ द्वौ | मन्दाक्रान्ता, पूर्वं विवृता। |
| ३८. ,, | षट्पञ्चाशः | शार्दूलविक्रीडितम्, जात्याद्युक्तम्। |

| | सर्गः | श्लोकः | छन्दः |
|---|---|---|---|
| ३९. | चतुर्थः | सप्तपञ्चाशः | द्रुतविलम्बितम्, लक्षणाद्युक्तम्। |
| ४०. | | तत एकषष्टं यावत् | वसन्ततिलका, पूर्वं विवृता। |
| ४१. | ,, | द्वाषष्टत एकसप्ततं यावत् | 'भवति नजावथ मालती जरौ' इति मालतीवृत्तम्, शिष्टं विवृतम्। |
| ४२. | ,, | द्वासप्ततः | रथोद्धता, रथौद्धत्यं विवृतम्। |
| ४३. | ,, | त्रिसप्ततः पञ्चसप्ततं यावत् | 'सुन्दरी', सौन्दर्यं प्रागुन्मोचितम्। |
| ४४. | ,, | षट्सप्तः | मालती, पूर्वं स्फुटा। |
| ४५. | ,, | सप्तसप्तत एकाशीतं यावत् | 'सुन्दरी', सौन्दर्यं मुहुरवलोक्यम्। |
| ४६. | ,, | द्व्यशीतः | मन्दाक्रान्ता, पूर्वमप्याक्रान्ता। |
| ४७. | ,, | त्र्यशीतः | 'सुन्दरी', पुनरवलोक्यताम्। |
| ४८. | ,, | चतुरशीतः | 'रथोद्धता', पूर्वं विवृता। |
| ४९. | ,, | द्वौ | 'वसन्ततिलका', पूर्वं तिलकिता। |
| ५०. | ,, | सप्ताशीतः | 'पुष्पिताग्रा', पूर्वमेव पुष्पिता। |
| ५१. | ,, | ततो द्वौ | वसन्ततिलका, पूर्वं विवृता। |
| ५२. | ,, | ततौ द्वौ | मालिनीशार्दूलविक्रीडिते (पूर्वं विवृते)। |
| | पञ्चमः | | सर्गेऽत्र यथायथमिन्द्रवज्रोपेन्द्रवज्रावंशस्थविलेन्द्रवंशोपजातिच्छन्दांसि द्रष्टव्यानि। |
| ५३. | ,, | प्रथमः | वंशस्थविलं छन्दः, शिष्टं विवृतम्। |
| ५४. | ,, | द्वितीयः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति मेलनाद् शुद्धोपजातिः, तत्प्रकार उक्तः। |
| ५५. | ,, | तृतीयः | पूर्वार्धे इन्द्रवज्रा, तृतीये उपेन्द्रवज्राऽन्ते वंशस्थेति मिश्रोपजातिः। |
| ५६. | ,, | चतुर्थः | तृतीये इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति मेलनाच्छुद्धोपजातिः। |
| ५७. | ,, | पञ्चमः | त्रिष्टुब्जातिकमेकादशाक्षरपादकं समवृत्तमिन्द्रवज्राख्यं वर्णच्छन्दः। |
| ५८. | ,, | षष्ठः | द्वितीय इन्द्रवंशाऽन्यत्रोपेन्द्रवज्रेति भिन्नजातिमेलनान्मिश्रोपजातिः। 'तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ'। |

| सर्गः | श्लोकः | छन्दः |
|---|---|---|
| ५९. पञ्चमः | सप्तमः | त्रिष्टुब्जातिकम्, उपेन्द्रवज्राच्छन्दः, शिष्टमुक्तम्। |
| ६०. ,, | अष्टमः | विषमयोस्समयोश्च यथाक्रममुपेन्द्रवज्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ६१. ,, | नवमः | प्रथम इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ६२. ,, | दशमः | उपेन्द्रवज्रा, लक्षणाद्युक्तम्। |
| ६३. ,, | एकादशः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ६४. ,, | द्वादशः | उपेन्द्रवज्रा। |
| ६५. ,, | त्रयोदशचतुर्दशौ | द्वितीययोरुपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिरुभयत्र। |
| ६६. ,, | पञ्चदशः | आद्य इन्द्रवज्राऽन्त्य इन्द्रवंशाऽन्यत्र वंशस्थेति मिश्रोपजातिः। |
| ६७. ,, | षोडशः | पूर्वार्ध इन्द्रवज्राऽन्यत्रेन्द्रवंशेति मिश्रोपजातिः। |
| ६८. ,, | सप्तदशः | प्रथम इन्द्रवंशा, तत इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति मिश्रोपजातिः। |
| ६९. ,, | अष्टादशः | पूर्वत्रोत्तरत्र यथाक्रममिन्द्रवज्रोपेन्द्रवज्रेत्युपजातिः। |
| ७०. ,, | एकोनविंशः | आद्यन्तयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेत्युपजातिश्शुद्धा। |
| ७१. ,, | विंशः | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ७२. ,, | एकविंशः | प्रथम इन्द्रवंशाऽन्यत्रेन्द्रवज्रेति मिश्रोपजातिः। |
| ७३. ,, | द्वाविंशः | अन्त उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ७४. ,, | त्रयोविंशः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ७५. ,, | चतुर्विंशः | तद्विपरीतेयं शुद्धोपजातिः। |
| ७६. ,, | पञ्चविंशः | त्रयोविंशवद् शुद्धोपजातिः। |
| ७७. ,, | षड्विंशः | प्रथमे वंशस्थविलम्, द्वितीय इन्द्रवंशाऽन्यत्रेन्द्रवज्रेति मिश्रोपजातिः। |
| ७८. ,, | सप्तविंशः | द्वितीय इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ७९. ,, | अष्टाविंशः | इन्द्रवज्रा। |
| ८०. ,, | ऊनत्रिंशः | इन्द्रवज्रा। |
| ८१. ,, | त्रिंशः | इन्द्रवज्रेन्द्रवंशाभ्यां मिश्रोपजातिः। |
| ८२. ,, | एकत्रिंशः | आद्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |

| | सर्गः | श्लोकः | छन्दः |
|---|---|---|---|
| ८३. | पञ्चमः | द्वात्रिंशः | इन्द्रवज्रा। |
| ८४. | ,, | त्रयस्त्रिशः | पूर्वार्ध उपेन्द्रवज्रोत्तरार्ध इन्द्रवज्रेति शुद्धोपजातिः। |
| ८५. | ,, | चतुस्त्रिशः | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ८६. | ,, | षञ्चत्रिंशः | आद्य इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ८७. | ,, | षट्त्रिंशः | आद्यन्तयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ८८. | ,, | सप्तत्रिंशः | अन्त्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ८९. | ,, | अष्टात्रिंशः | आद्यन्तयोरिन्द्रवज्रा, शिष्टे उपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९०. | ,, | ऊनचत्वारिंशः | आद्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ९१. | ,, | चत्वारिंशः | समयोरुपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ९२. | ,, | एकचत्वारिंशः | तृतीय इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९३. | | द्वाचत्वारिंशः | इन्द्रवज्रा। |
| ९४. | ,, | त्रिचत्वारिंशः | तृतीय इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९५. | ,, | चतुश्चत्वारिंशः | समयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९६. | ,, | ततो द्वौ | इन्द्रवज्रे। |
| ९७. | ,, | सप्तचत्वारिंशः | आद्यन्तयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९८. | ,, | अष्टचत्वारिंशः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ९९. | ,, | ऊनपञ्चाशः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १००. | ,, | पञ्चाशः | अन्त्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १०१. | ,, | एकपञ्चाशः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११२. | ,, | द्वापञ्चाशः | आद्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११३. | ,, | त्रिपञ्चाशः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ११४. | ,, | चतुष्पञ्चाशः | अन्त्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११५. | ,, | पञ्चपञ्चाशः | आद्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११६. | ,, | षट्पञ्चाशः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजतिः। |
| १०७. | ,, | सप्तपञ्चाशः | आद्य इन्द्रवज्रा, समयोरुपेन्द्रवज्रा, तृतीय इन्द्रवंशेति मिश्रोपजातिः। |
| १०८. | ,, | ततो द्वौ | इन्द्रवज्रे। |
| १०९. | ,, | षष्टितमः | समयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |

| | सर्गः | श्लोकः | छन्दः |
|---|---|---|---|
| ११०. | पञ्चमः | एकषष्टः | विषमयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १११. | ,, | द्वाषष्टः | पूर्वार्ध इन्द्रवंशाऽन्यत्रेन्द्रवज्रेति मिश्रोपजातिः। |
| ११२. | ,, | त्रिषष्टः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११३. | ,, | चतुष्षष्टः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ११४. | ,, | पञ्चषष्टः | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११५. | ,, | षट्षष्टः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११६. | ,, | सप्तषष्टः | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| ११७. | ,, | अष्टाषष्टः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ११८. | ,, | ऊनसप्ततः | विषमयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| ११९. | ,, | सप्ततितमः | अन्त्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १२०. | ,, | एकसप्ततः | पूर्वार्ध इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १२१. | ,, | द्वासप्ततः | पूर्वार्ध उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १२२. | ,, | त्रिसप्ततः | इन्द्रवज्रा। |
| १२३. | ,, | चतुस्सप्ततः | आद्यन्तयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १२४. | ,, | पञ्चसप्ततः | अन्त्य इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १२५. | ,, | षट्सप्ततः | द्वितीय इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १२६. | ,, | सप्तसप्ततः | आद्ये वंशस्थविलम्, द्वितीय इन्द्रवंशाऽन्यत्र इन्द्रवज्रेति मिश्रोपजातिः। |
| १२७. | ,, | अष्टासप्ततः | आद्य उपेन्द्रवज्रा, तत इन्द्रवंशाऽन्यत्रेन्द्रवज्रेति मिश्रोपजातिः। |
| १२८. | ,, | ऊनाशीतः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १२९. | ,, | अशीतितमः | विषमयोरिन्द्रवज्रा, द्वितीय इन्द्रवंशाऽन्यत्र उपेन्द्रवज्रेति मिश्रोपजातिः। |
| १३०. | ,, | एकाशीतः | आद्य उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १३१. | | ततो द्वौ | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १३२. | ,, | चतुरशीतः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १३३. | ,, | पञ्चाशीतः | उपजातिः। |
| १३४. | ,, | षडशीतः | इन्द्रवज्रा। |

| सर्गः | श्लोकः | छन्दः |
|---|---|---|
| १३५. **पञ्चमः** | सप्ताशीतः | तृतीये वंशस्थविलमन्यत्रोपेन्द्रवज्रेति मिश्रोपजातिः। |
| १३६. ,, | अष्टाशीतः | उपेन्द्रवज्रा। |
| १३७. ,, | ऊननवतः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १३८. ,, | नवतितमः | आद्यन्तयोरिन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति शुद्धोपजातिः। |
| १३९. ,, | एकनवतः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १४०. ,, | द्वानवतः | इन्द्रवज्रा। |
| १४१. ,, | त्रिनवतः | द्वितीय इन्द्रवंशाऽऽद्य इन्द्रवज्राऽन्यत्रोपेन्द्रवज्रेति मिश्रोपजातिः। |
| १४२. ,, | चतुर्णवतः | तृतीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १४३. ,, | पञ्चनवतः | आद्य उपेन्द्रवज्राऽन्त्य इन्द्रवज्राऽन्यत्र वंशस्थविलमिति मिश्रोपजातिः। |
| १४४. ,, | षण्णवतः | इन्द्रवज्रा। |
| १४५. ,, | सप्तनवतः | विषमयोरिन्द्रवंशा, द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति मिश्रोपजातिः। |
| १४६. ,, | अष्टानवतः | द्वितीय उपेन्द्रवज्राऽन्यत्रेन्द्रवज्रेति शुद्धोपजातिः। |
| १४७. ,, | ततश्चत्वारः | वसन्ततिलका, लक्षणाद्युक्तम्। |
| १४८. | अन्त्यः | प्रतिसर्गान्तवत्। |
| १४९. **षष्ठः** | आदितः षट्पञ्चाशं यावत् | वसन्ततिलका, लक्षणजात्याद्युक्तम्। |
| १५०. | ततस्त्रयः | शार्दूलविक्रीडितम्, लक्षणजात्याद्युक्तम्। |
| १५१. **सप्तमः** | आदितः सप्तपञ्चाशं यावत् | शार्दूलविक्रीडितं छन्दः, लक्षणजात्याद्युक्तम्। |
| १५२. ,, | ततो द्वौ | मालिनी, लक्षणजात्याद्युक्तम्। |
| १५३. ,, | षष्टितमः | त्रिष्टुब्जातिकं प्रतिपादमेकादशाक्षरात्मकं शालिनीनामकं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—'मात्तौ गौ चेच्छालिनी वेदलोकैः। |
| १५४. ,, | एकषष्टद्वाषष्टौ | शार्दूलविक्रीडितम्। |
| १५५. **अष्टमः** | आदितस्त्र्यशीतं यावत् | प्रतिपादमष्टाक्षरात्मकमनुष्टुब्जातिकं समवृत्तमनल्पभेदभूयिष्ठम्, सामान्यतस्तु—'लोके षष्ठं गुरु.....' इत्यादि ख्यातमेव वर्णच्छन्दः। |

| सर्गः | श्लोकः | छन्दः |
|---|---|---|
| १५६. अष्टमः | चतुरशीत-पञ्चाशीतौ | जगतीजातिकं प्रतिपादं द्वादशाक्षरात्मकं स्रग्विणी-नामकं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—'कीर्तितैषा चतू रेफिका स्रग्विणी' (द्र.छ.म.)। |
| १५७. ,, | षडशीतसप्ताशीतौ | त्रिष्टुब्जातिकं प्रतिपादं एकादशाक्षरात्मकं शालिनीनामकं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—"मात्तौ गौ चेच्छालिनी वेदलोकैः"। |
| १५८. ,, | अष्टाशीतः | जगतीजातिकं प्रतिपादं द्वादशाक्षरात्मकं समवृत्तं कुसुमविचित्राख्यं वर्णच्छन्दः; तल्लक्षणं यथा—'न-य-सहितौ न्यौ कुसुमविचित्रा' इति। इदं छन्दो गायत्री-जातिकस्य प्रतिपादं षडक्षरात्मकस्य समवृत्तस्य शशि-नदनाख्यवर्णच्छन्दसो द्विगुणात्मकम्। यथाऽन्यत्रापि 'प्रमाणिकाद्वयात्मकं वदन्ति पञ्चचामरम्', 'समानिका-द्वयात्मकञ्च चित्रसञ्ज्ञमीरितं' प्रतिपादं षोडशाक्षरात्मक-मष्टिजातिकं समच्छन्दो भवति रूपमिति दिक्। |
| १५९. ,, | ऊननवतः | अत्यष्टिजातिकं प्रतिपादं सप्तदशाक्षरात्मकं 'पृथ्वी'-नामकं समवृत्तं वर्णच्छन्दः, तल्लक्षणं यथा—'जसौ जसयला वसुग्रहगतिश्च पृथ्वी गुरुः'। |
| १६०. ,, | नवतितमः | प्रतिसर्गान्तं यथा। |
| १६१. नवमः | आदितः पञ्च-पञ्चाशं यावत् | द्रुतविलम्बितं छन्दः, लक्षणजात्यादि प्रागेवोपाचरितम्। |
| १६२. ,, | षट्पञ्चाष्टापञ्चाशौ | स्रग्धरा, विवरणं विवृतम्। |
| १६३. ,, | ऊनषष्टसप्तपञ्चाशौ | त्रिष्टुब्जातिकैकादशाक्षरपादकसमवृत्तं वर्णच्छन्दः स्वागताख्यम्, तल्लक्षणं यथा—'स्वागतेति रनभाद् गुरुयुग्मम्' इति। , |
| १६४. ,, | षष्टितमः | प्रतिसर्गान्तिवत्। |
| १६५. दशमः | आदित एकषष्टं यावत् | वसन्ततिलका, विवरणं विवृतम्। |
| १६६. ,, | ततो द्वौ | मालिनी, विवरणमुक्तम्। |
| १६७. ,, | चतुष्षष्टः | प्रतिसर्गान्तिवत्। |

| सर्गः | | श्लोकः | छन्दः |
|---|---|---|---|
| १६८. | एकादशः | आदितो दशोत्तर-शततमं यावत् | अष्टादशस्य द्वितीये प्रमाणिकालक्षणस्यापि सङ्गतत्वाच्छुद्धोपजातिर्वक्तुं शक्या। |
| १६९. | ,, | ततस्त्रयः | शार्दूलविक्रीडितम्, विवरणं विवृतम्। |
| १७०. | द्वादशः | आदितष्षट्षष्टं यावत् | अत्र इन्द्रवज्रोपेन्द्रवज्रोपजातिच्छन्दांसि यथायथं ज्ञेयानि, एतद्विवरणानि विवृतानि। |
| १७१. | ,, | ततो द्वौ | वसन्ततिलका, विवरणं विवृतम्। |
| १७२. | ,, | ऊनसप्ततः | स्रग्धरा, विवरणं विवृतम्। |
| १७३. | ,, | शिष्टास्त्रयः | शार्दूलविक्रीडितम्, विवरणं विवृतम्। |



# परिशिष्टम्-'ख'

# वैयाकरणङ्किञ्चित्

**सर्गः, श्लोकश्चरणश्च**

**प्रथमः सर्गः**

,, २/४ **मयका** = मया। 'अव्ययसर्वनाम्नामकच् प्राक्टेः' (५।३।७१)।

५/४ **पावयतकि** = पावयति 'पूञ् पवने' (क्र्या.उ.सेट्) हेतुमण्णिचि स्वार्थेऽकचि रूपम्। उक्तसूत्रे 'तिङश्च' इत्यनुवर्तनात् (द्र.सि.कौ.)।

१२/१ **जटाजूटः**—जटानां जूटः = ग्रन्थिमयबन्धनम्।

१२/४ **अन्यथयितुम्** = अन्यथा कर्तुम्।

१८/१ **छविहरम्**—'हरतेरनुद्यमनेऽच्' (३।२।९)। तथा च 'छविं हरति' इति कर्मोपपदकान्न कर्मण्यण् (द्र.मनो.)।

,, २१/१ **वर-वरटे**। वरा च सा वरटा च। 'हंसस्य योषिद् वरटा' (द्र. नामलिङ्गा. २/५/२५)।

,, ३०/४ **हरित्**—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' (द्र.नाम. १/३/१)।

,, ३१/३ **धरणिः**—'धृञ् धारणे' (भ्वा.उ.अ.) 'अर्तिसृधृधम्यम्यश्य-वितृभ्योऽनिः' (द्र.उ०२/१०२) इति, अत एव 'तव स्तन्यं मन्ये धरणिधरकन्ये तुलयितुम्' इति भगवत्पादप्रयुक्तः प्रयोगः पेशल इति दिक्।

,, ३३/१ **वङ्गे देश** इति। न च 'णीञ् प्रापणे' इति धातुप्रयोगे 'ग्राममजां हरति नयति' इतिवद् अत्र द्वितीयया भूयतामिति वाच्यम्, 'अपादानादि-कारकविशेषैरविवक्षितम्' इत्युक्त्या तत्तद्विवक्षायां तत्तद्विभक्तिः साध्वी, अत एव 'तस्मिन्नद्रौ..... (द्र.मेघ.)' इति महाकविप्रयोगः सङ्गच्छते। कर्मत्वेनाप्यविवक्षायान्तु षष्ठ्येव—ग्रामस्य अजां नयतीति दिक्।

३५/३ **अतिमनुजेति।** मनुजानतिक्रान्तोऽतिमनुजः, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति 'कुगतिप्रादयः' (२/२/१८) इति सूत्रस्थवार्तिकेन समासः।

३६/३ '.......**कालीकृते** = कृष्णीकृते। अभूततद्भावे च्विः, 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति व्याख्यासुधास्थमेदिनी (१४५/७)। 'कल् गतौ सङ्ख्याने च' (चु.उ.से.) घञ्। 'कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः। मरणानेहसोः काली कालिकाक्षीरकीटयोः। मातृभेदोमयोर्नव्यमेघौघ-परिवादयोः। काला कृष्णत्रिवृन्नील्योर्जङ्घ्याम्' इति हैमः (२/४९०,४९१)।

३८/४ .......**कुलमणी।** 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च।' (द्र. नामलिङ्गा. २/९/९३) 'मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च। कण्ठदेशस्तनेऽनासालिङ्गाग्रेऽलिञ्जरेऽपि च'।। (मे. ४६/२३-२४ व्या.सु.) ततो रेफलोपे दीर्घः।

४०/१ **शरदि** = वत्सरे। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' (नाम.१/४/२०)। शततमेति तु 'नित्यं शतादिमासार्धमाससंवत्सराच्च' (५/२/५७) इति तमट्। द्वाषष्ट्यधिकद्वादशशते बङ्गाब्द इत्यर्थः।

४१/१ **कोकिलकलाः।** 'ध्वनौ तु मधुरास्फुटे। कलः-' (द्र.नाम.१/७/२) 'कलं शुक्रे त्रिष्वजीर्णे चाव्यक्तमधुरध्वनौ' (व्याख्यासुधाशोधितमेदिनी-१४५/५-६)। **सुकलितकला। सुष्ठु कलिताः** = आकलिताः (कलिबली कामधेनुः) **कलाः** = सङ्गीतपञ्चमस्वरा यैस्ते।

४१/३ **स्फुटिताः** = विकसिताः **समाः** = सर्वाः, **कलयः** = कलिका यया तया। 'कलि स्त्री कलिकायां ना शूराजिकलहे युगे' (द्र. ३/३/११४ सुधास्थमेदिनी)। अन्यपदार्थः काकली—'काकली तु कले सूक्ष्मे' (नाम.१/४/२४)।

४२/४ **पुरा सफलयति।** भविष्यतीत्यनुवर्तमाने 'यावत्पुरानिपात-योर्लट्' (३/३/४ द्र.बृ.शे., पृ. १९८४) एवञ्च 'भोलानाथः' इति स्वाख्यां सफलयिष्यतीत्यर्थः।

४३/३ **समुदम्।** 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः' इति (नाम. १/३/१६)। तत्र 'आपञ्चैव हलन्तानाम्' इति वैकल्पिके

टापि, मुदया = प्रीत्या सहितं समुदम् = सप्रीतिः। 'अच् प्रत्यन्ववपूर्वात् सामलोम्नः' (५/४/७५) इत्यत्र 'अच्' इति योगविभागादन्यत्रापि इत्युक्तेर्वाऽच्।

४४/१ **वर्धमानः** = एधमानः। अन्यत्र सञ्ज्ञा। अत्रैव—'लक्ष्मीः सम्पत्तिशोभयोः। ऋद्ध्योषधौ च पद्मायां वृद्धिनामौषधेऽपि च'।। (द्र.मे.१०९/२८/९।

४५/१ **'.........हीरप्रभा'** इति। अत्र 'प्रभास्' इति 'भासृ दीप्तौ' इत्यस्मात् क्विपि रूपम्, न तु आदन्तः, अत उपसर्जनह्रस्वो न। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इति नाम०। अत्रैव—**शाब्दिककवीत्यत्र** शाब्दिकोल्लेखस्तदानीमहं व्याकरणाचार्यद्वैतीयीकवार्षिकच्छात्र आसमिति सूचनाय।

**द्वितीयः सर्गः**

४/३ **अधिरसम्** = रसायाम् इत्यधिरसम्, पृथिव्यामित्यर्थः।

८/१ **शोभिताक्कः**। शिवपक्षे—**अक्का** = जगन्माता, बालपक्षे—**अक्कानि** = गृहकोणाः, 'अक्के चेन्मधु विन्देत' इत्यादौ यथा।

९/३ **व्यकसत्** = धातूनामनेकार्थत्वात्प्रकाशे प्रयोगः।

९/४ **'........गोपुर-'** 'द्वारमात्रे तु गोपुरम्' 'गृहारामास्तु निष्कुटाः' इति च नाम०। (द्र० ३।३।१८२, २।४।९)

१४/४ **'......तदीयतनौ'**। उपानुपसृष्टत्वान्न कर्म।

२३/४ **'श्रीमज्जनार्दनप्रभुः** इति। 'प्रह्वे वा' इति गुर्वभावः।

२९/४ **'चापल्यतः.....'**। यद्यपि 'चापलाय प्रचोदितः', 'चापलं मे किमप्यत्र' इति सर्वत्र अणेव; परन्तु ब्राह्मणादौ चपलशब्दपाठदर्शनेन 'चापल्यम्' इत्यपि साधु। ततः पञ्चम्यर्थे 'आद्यादित्वात्तसिः'।

३२/१ **चखर्द**। 'खर्द द्वन्द्वशूके' (भ्वा.प.से.)। दंशनहिंसादिरूपायां द्वन्द्वशूकक्रियायामित्यर्थः (क्रियावाचित्वस्यैव धातुत्वात्)।

३४/४ **चिकाय** = निश्चिकायेत्यर्थः, 'विनापि प्रत्ययं पूर्वोत्तरलोपो द्रष्टव्यः', 'कथमनुच्यमानं गंस्यते' (= अवगंस्यते) इत्यादौ यथा। 'विभाषा चेः' (७/३/५८) इति वा कुत्वम्।

अनुपसृष्टोऽपि। प्रकृतानुकूलः, **चिकाय** = अचैषीद् इति। वार्तिकप्रवृत्तिमन्तराऽपि उपसर्गाणां द्योतकपक्षाभ्युपगमनात्साधु।

३५/२ ..........**अबालचरितः।** अमुग्धचरितः, दृढचरित इति यावत्।

४१/३ **विनिहन्तुकामः**—'लुम्पेदवश्यमः कृत्ये तु काममनसोरपि। समो वा हित-ततयोर्मांसस्य पचि युड्घञोः।।'

४१/४ **'पुष्कल—' पुष्पकलानि** = बहूनि, **सु** = शोभनानि **पुष्कराणि** = पद्मानि यत्र, तस्यां **पुष्करिण्याम्** = सरस्याम्।

५२/४ **खण्डशः** = खण्डं खण्डं चक्रे। वीप्सायां शस्।

५५/४ **झगिति** = झटिति (द्र.अव्ययप्र.)

५७/४ **खुल्लतातः** = पितृव्यः, पितुर्लघुभ्राता।

६४/३ **दर्शिवान्तु** = वाक्ये तु सा विवक्षामपेक्षते।

६६/४ **'विद्यारत्नः'** इति तन्नाम।

## तृतीयः सर्गः

१/४ **स्वीयाम्नायम्।** 'स्वाध्यायोऽध्येतव्यः' इत्यत्र स्वत्वस्यैकत्वस्य च विवक्षणात् स्ववेदान्तर्गतस्वशाखाध्ययनं स्वाध्यायः।

७/३ **गञ्जात्** = आकरात्। 'गञ्जा खनौ सुरागेहे स्याद् भाण्डागाररीढयोः। गञ्जः.......' (द्र.विश्व. ३३/११-१२), 'गञ्जः स्यात् पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्'। (द्र.मे.३०८), व्याख्यासुधायां टिप्पण्याञ्च। 'ज्ञानगञ्ज'शब्देऽपि इदं बोध्यम्। (गजि भ्वा.प.से., घञ्) खनिरित्यर्थः।

२८/३ **शर्वलाम्।** 'शर्वला तोमरोऽस्त्रियाम्' (नाम. २/८/९३)। 'गडाँसा' इति हिन्द्याम्।

३०/३ **मङ्क्षु** = शीघ्रम्।

३२/१ **तत् पश्चात्।** भिन्ने पदे। **तत्** = तस्मात् (द्र.अ.प्र.) 'ततः पश्चात् स्रंस्यते ध्वंस्यते वा' इति भाष्यात् समासाभावः।

४०/३ **संविश** = शयनं कुरु।

४३/४ आत्मरक्षायै वंशग्रहणम्।

४७/४ **तमसे** = तमसि। तमु इत्यस्मात् 'अत्यवि-चमि-तमि-नमि-रभि-लभि-नभि-तपि-पति-पनि-पणि-महिभ्योऽसच्' (उ०३/११७)।

५१/४ **दिष्टिः** = भाग्यम्। (द्र.संस्कृतशब्दार्थकौस्तुभः)

५३/३ **अलर्कः** = उन्मत्तकुक्कुरः। 'अलर्को धवलार्के स्याद् योगोन्मादितकुक्कुरे' (द्र.मे. ४/४५ रामाश्रमी)।

५७/२ **गोधूमक्षोद**। गोधूमचूर्णेत्यर्थः, 'आटा' इति भाषा।

चतुर्थः सर्गः

१/१ **मेलनम्**। 'मिल् श्लेषणे' (तु.प.से.), 'मिल् सङ्गमे' (तु.उ.से.) अस्मात् स्वार्थणिजन्ताल्ल्युडन्तम्।

१/२ **आश्वस्त**। 'गत्यर्थाऽकर्मक-श्लिष-शीङ्-स्थाऽऽस-वस-जन-रुह-जीर्यतिभ्यश्च' (३/४/७२) अनेन कर्म-कर्तृ-भावेषु क्तो विहितः, आगमशास्त्रमनित्यमिति नेट्।

२/४ **परमचकितः**—परमश्चासौ चकितश्च। चकितः = तृप्तः। 'चक् तृप्तौ प्रतीघाते च' (भ्वा.प.से.), 'चक् तृप्तौ' (भ्वा.प.से.)। पूर्वस्यैव तृप्तिमात्रे मित्त्वार्थे पुनः पाठः। कदाचित्तृप्तौ धातुरयं नितरां व्यवह्रियमाण आसीदतश्च—'पूरणगुणसुहितार्थसदव्यय-तव्यसमानाधिकरणेन' (२/२/११) सूत्रे 'सुहितार्थः = तृप्त्यर्थः' इति व्याख्यातम्, हिन्द्यामपि 'चकाचक भोजन भयल' इति प्रसिद्धमेवेति दिक्।

११/४ **सायाते** इति। स आयाते इत्यर्थः, 'सोऽपि लोपे चेत्पादपूरणम्' (६/४/१३४) इति लोपे सन्धिः, 'सैष दाशरथी रामः' इतिवत्। एवं बहुत्राग्रेऽपि। **'अथो उचित'** इति। मङ्गलाऽनन्तरारम्भकृत्स्नकार्येष्वथो अथ' (द्र.नाम. ३/३/१२०), 'ओत्' इति प्रगृह्यत्वे प्रकृतिभावान्न सन्धिः, कोशेऽपि तथा। **त्वां नेता**—'कर्तृकर्मणोः कृति' इति प्रबाध्य 'गुणकर्मणि वेष्यते' इति तु न; 'त्वाम्' इत्यस्य गुणकर्मत्वाभावात्। 'त्वां ज्ञानगञ्जं ज्ञानगञ्जे वा नेता' इति हि वाक्यम्। एवञ्च—'तव नेता' इति स्याद् इति चेत्? न, 'न लोकाव्यय-निष्ठाखलर्थतृनाम्' (२/३/६९) इत्यत्र 'तृन्' इति प्रत्याहाराश्रयणात् तृन्नन्तस्य नेतृशब्दस्य प्रयोगे षष्ठीं निषिध्य, 'देवदत्ते हते तद्धन्तरि हते न देवदत्तस्य पुनरुज्जीवनम्' इत्यस्याविषयत्वात्, देवदत्तं हननोद्यतस्य हनने देवदत्तस्य

जीवनमस्त्येवेति दर्शनाद् 'भ्रष्टावसरन्यायस्य' च 'तौ सत्' (३/२/१२७) इति निर्देशादनित्यत्वात्प्रकृते द्वितीया।

१२/४ **अमलम्** = आणवमलहीनम्।

१३/४ **मोहमयामय** इति। मोह एव मोहमयः, स्वार्थे मयट्। 'तत्प्रकृतवचने मयट्' (५/४/२१)। प्रथमान्तात् प्रकृते द्योत्ये मयट्। अस्मिन् पक्षे तद्ग्रहणं व्यर्थम्, प्रकृतवचने वर्तमानस्य प्रथमान्ततैव सम्भवतीति, तद्ग्रहणं व्यर्थं सद् वाक्यभेदेन प्राचुर्याभावेऽपि अत्यन्तस्वार्थिकमयडर्थमिति। (द्र.तत्त्व.दाधि.)

४१/१ **परिहीन**....। 'अधिपरी अनर्थकौ' (१/४/९३) इति कर्मप्रवचनीयत्वेनोपसर्गत्वाभावाण्णत्वाप्रवृत्तिः। 'सामान्यपरिहीनास्तु—' इति विश्वनाथभट्टाचार्योक्तदिशोन्नेयम्। **हीनवासनौ** = त्यक्तवासनौ इति। 'ओहाक् त्यागे' (जु.प.अ.) इति।

४३/३-४ **सङ्गृह्येति**। सम्यग् गृहीत्वेत्यर्थे प्रयोगः, न तु सङ्ग्रहं कृत्वेति। 'तद् गृह्य' इति वा पाठः। **तद्** = अङ्गुलिद्वयम्। अत्र पक्षे **गृह्य** = गृहीत्वा। 'सन्ध्यावधूं गृह्य करेण भानुः' इति 'व्यायामोष्णं गृह्य चापं करेण' इति च यथाक्रमं निर्णयसागरीयमहाभाष्यनवाह्निकभूमिकोद्धृतमहाकवित्वसाधकपाणिनिकृतस्वर्गारोहणमहाकाव्यप्रयोगात्, महाकविभासकृतदूतघटोत्कचाख्यरूपकस्थदुःशासनवाक्यात्मकप्रयोगात्तथा प्रयोगः।

९/१-२ **'कलकल—'**। **कलानाम्** = मधुरास्फुटध्वनीनाम्, 'ध्वनौ तु मधुरास्फुटे। कलः' (द्र.नाम. १/७/२) **कलाः** = अंशा येषाम्, तेषां **वीनां** = पक्षिणाम्, 'वि-विष्करपतत्त्रयः' (द्र.नाम. २/५/३३)। यथा—विमान(व्योमयान)शब्दे विशब्दः। **कुलैः** = समूहैः, **आकुलाः**, **आ** = समन्तात् **कुलायाः** = नीडानि यत्र। अग्रे च—**निगमसमूहे सम्यग् ऊहः** = 'प्रकृतिवद् विकृतिः कर्तव्या' इति मीमांसासमयो येषां तेषां **योगिनां योगः** = प्रक्रियाविशेषानुष्ठानं यत्र सा। **वनी** इति गौरादित्वात् ङीष्। अन्यत् सुगमम्।

५०/१ **अनुयोगे** = प्रश्ने। 'प्रश्नोऽनुयोगः पृच्छा च' (द्र.नाम.१/६/१०)।

५५/१ **परमपरितृप्तिं प्रयातौ** = गतौ लब्धौ इत्यर्थः। बाहुलकात् कर्तरि क्तः, लब्धवन्तौ इति यावत्।

५५/४ **बुबुधाते अयम्**। 'ईदूदेद्द्विवचनं प्रगृह्यम्' (२।१।३०)।

६२/३ **किमु अधुना**। किमु उक्तमितिवत् प्रयोगः।

६६/१ **स्तिमितेक्ष—**। **स्तिमितम्** = क्लिन्नम्। 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नतमुन्नतञ्च।' (द्र.नाम. ३/१/१०५)

८६/३-४ **एकं दिनमतिष्ठत्**। 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम्' इति 'चन्द्रापीडः कतिपयान् दिवसानतिष्ठत्' इतिवत् प्रयोगः।

८७/२ **विषयान्तरम्** = देशान्तरम्। 'विषयो गोचरे देशे तथा जनपदेऽपि च। प्रबन्धाद्यस्य यो ज्ञातस्तंत्र रूपादिके पुमान्'।। (द्र. नामलिङ्गानुशासनीयसुधास्थमेदिनी)

**पञ्चमः सर्गः**

६/४ **परस्परार्धाः**। परार्धात् परे परार्धाधिका इत्यर्थः, 'पञ्चमी' इति योगविभागात्समासः, राजदन्तादित्वात् (२/२/३१) पूर्वनिपातः, पारस्करादित्वात् (६।१।१५७) सुट्। उक्तयोर्गणयोरनयोरदर्शनाद् आकृतिगणत्वमभ्युपेयम्, वृत्करणाभावात्।

३५/१ **'श्रीज्ञानगञ्जः'** इति। 'गञ्जा खनौ सुरागृहे। गञ्जः स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्' इति। 'गञ्जा खनौ सुरागेहे स्याद् भाण्डागाररीढयोः। गञ्जः' इति (नाम. २/२/८ स्थितसुधास्थमेदिनी, विश्व. टिप्पणी द्र.)। अत्र पुंल्लिङ्गपाठात् 'श्रीज्ञानभाण्डागारम्' इत्यर्थः। एवं सर्वत्र।

६३/ **विद्या ह वै** (द्र.निरुक्तं द्वि.प्र.)।

६४/ **नारायण—**। इमे ऋषयो वैज्ञानिकाः, भरद्वाजकृतस्य यन्त्रसर्वस्वनामकग्रन्थस्य चत्वारिंशाधिकारे वैमानिकप्रकरण एतत्कर्तृकग्रन्थाद्युपलब्धेः।

**षष्ठः सर्गः**

२०/१ **'.......यौवतवरै'**। युवतीनां समूहो यौवतम्। 'भिक्षादिभ्योऽण्' (४/२/३८), 'भस्याढे तद्धिते' (६/३/३५ वा.) इति पुंवत्।

२२/४ **......गवेषणा**। 'गवेष अन्वेषणे' इति चुरादिण्यन्तात् 'ण्यासश्रन्थो युच्' (३/३/१०७)।

३१/२ **घस्त्रत्रयम्** = दिनत्रयम्। 'पूरणगुण—' इति अनित्योऽयं गुणेन निषेधः, 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात्' इति निर्देशात्।

३५/४ **अधरत्**। 'धृञ् धारणे' (भ्वा.उ.अ.)। कर्तरि लङ्, प्र.पु.एकवचनम्।

३७/२ ........**सिद्धिलिप्सुः**। गम्यादीनामुपसंख्यानमिति समासः। 'गम्यादयः प्रयोगतो ज्ञेयाः' (द्र.तत्त्व.)।

**सप्तमः सर्गः**

१/१ **'अस्ति.........।'** श्लोकत्रयमेकान्वयि सन्दानितकम् (सा.द.)।

३५/२ **वा सद्वाद** इति। वाऽसद्वाद इत्यपि च्छेदः।

४७/२ **अधिगतः** = अधिगतवान्, कर्तरि क्तः।

६०/१ **पर्यटन्त्सः**। नश्चेति धुट्, चर्त्वम्।

**अष्टमः सर्गः**

३/ **गतश्यामा** = अकृष्णा इत्यर्थः। सदा पूर्णचन्द्रज्योत्स्नाढ्याऽपि। **सश्यामा** = श्यामाख्यभैरवीयुता। **निर्भयाऽपि, भया = प्रभयाऽ**न्विता। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः। **अदिष्टा** = कालातीता, 'कालो दिष्टोऽप्यनेहापि समयः.......' इत्यमरः। **सदिष्टा = सतामिष्टा**। **सवया** = पक्षिकुलाकुलापि, **अवया = वयोऽतीता**।

८०/२ **'संसारः'** सम्यक् सारो यत्र।

**नवमः सर्गः**

१/३ ...........**व्रतो ऋतुसखः**। ऋकारवृत्तिरेफांशे परे हशि चेत्युत्त्वम्, अत एव 'वसतो ऋष्यमूके मे' '......**सत्यं ऋतसत्य'** 'अऋणी'प्रभृतिप्रयोगास्सङ्गच्छन्ते। ऋकारांशं रकारमाश्रित्य 'पितॄणाम्' इत्यादौ णत्वसिद्धौ 'ऋवर्णान्नस्य णत्वं वाच्यम्' इत्यन्यथासिद्धमिति दिक्। (द्र.म.भा. ८/४)

५/३ **अकृषत**। करोतेः कर्तरि लुङि प्रथमबहुवचने आत्मनेपदे रूपम्। **'आत्मभुवः'** इति कर्तृपदम्। यद्यपि कर्मणि लकारे लुङि प्रथमबहुत्वेऽपि पक्षे तदपि रूपम्—'अकारि, अकारिषाताम्-अकृषाताम्, अकारिषत-अकृषत' इत्यन्यत्।

८/४ **व = इव**। 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति। 'मणीवोष्ट्रस्य—'इत्यादौ यथा। एवमग्रेऽपि बहुत्र। (द्र.नाम. ३/४/९ व्या.सु.)

२२/२ **योगितनोरनुकरोति**। 'कृञः प्रतियत्ने' (२।३।५३) इति षष्ठी। स्मरकर्तृकगुणाधानेच्छात्र।

२८।१ **अवनितः**। सप्तम्यर्थे सार्वविभक्तिकस्तसिः। अवन्याम् इत्यर्थः। **तनुतः** = तन्वाऽप्येवम्।

३०/४ **अनसि** = शकटे, एवञ्च तदुपरि काम आरूढवानिति यावत्। **अनसि** = शोके वा।

३१/१ **उदयितः** = सञ्जातोदयः, इतचि रूपम्।

३६/४ **मयका** = मया। **सदृशः** = तुल्यः 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' (२/३/७२) इति पाक्षिकी तृतीया।

३८/२ **अचकथत्**। 'कथ वाक्यप्रबन्धे' (चु.उ.सेट्) अग्लोपित्वान्न दीर्घसन्वद्भावौ। एषु अकारोऽन्त्यावयवो न तूच्चारणार्थः (तत्त्व.)।

५६/१ **'बहुनियुतसमाका'**। 'शेषाद्विभाषा' (५/४/१५४); ततः 'आपोऽन्यतरस्याम्' (७/४/१५)।

५८/२ **तेन** = श्रीभृगुरामपरमहंसमहोदयेन।

६०/४ '....... **विशुद्धवैभवमये'** = विशुद्धवैभवे। स्वार्थे मयट्, तत्प्रकारः पूर्वमुक्तः।

**दशमः सर्गः**

४/१ **भ्रमणतः** = भ्रमणप्रसङ्गात्। **हरितासु** = दिशासु। 'आपञ्चैव हलन्तानाम्......' इति।

१२/२ **स्म चरीकरीति** = पुनः पुनरतिशयेन वा चकार। रुग्रिकौ च लुकि, 'ऋतश्च' (७/१/९१-९२), 'यङो वा' (७/३/९४) इति बोध्यम्।

५५/१ **'देवज्योतिषम्' 'राज्ज्योतिषम्'** इति ज्योतिषशास्त्रस्य द्वे प्रक्रिये योगिनां योगलभ्ये।

**एकादशः सर्गः**

९/१ **अत एव**—'गृही भूत्वा वनी भवेत्....' इति, 'यदहरेव विरजेत्तहरेव प्रव्रजेद् गृहाद् वा वनाद् वा' इति चोक्तेः।

५४/४ **सिष्णासुः** इति। अत्र दन्त्यपाठस्तु लेखकप्रमादात्।

**द्वादशः सर्गः**

१/२ **चान्द्रीलसितस्य** इति। अचिन्त्यमहिमसु योगिषु बह्व्यः शक्तयो वसन्ति, तत्र तान् परितः चान्द्री सौरी आग्नेयी चेति तिस्रः शक्तयो रक्षायै विराजन्ते, तत्र तत्समीपमागतस्य आग्नेय्या नाशः, सौर्या वैरत्यागः, चान्द्र्या च आनुकूल्यं

भवतीति समयः, तथात्वे सर्पादीनामप्यानुकूल्यं प्रत्यक्षमिति दिक्।

११/३ **समजे** = पशुसमुदाये।

२४/४ **निश्चिकाय** इति। 'विभाषा चेः' (७/३/५८) इत्यभ्यासात् परस्य वा कुत्वम्।

३४/३ **विश्वस्य** = विश्वासं कृत्वा।

४६/४ **'.......इदंविवेकः'**। समस्तत्वे कर्मधारयः, अन्यथा विज्ञानान्वयीति विवेकः।

५४/२ **पण्डितमण्डलेन्दुः।** चान्द्रीलसितः, अनुभूतं चैतदस्माभिरसकृत्।

६६/२ **शवासनेन** इति। प्रारब्धं कर्म पूर्णं भुक्त्वाऽपि शरीरमिदमेव धृत्वा साधकः सञ्चितकर्म निनाशयिषुः शवासनवान् भवतीति गुह्यमूह्यं गुरुकृपयेति शम्।

६७/३ **'यो दर्शयाम्प्रथममास च नाभिपद्मम्'** इति। 'प्रभ्रंशयां यो नहुषञ्चकार' (रघु. १३।३६) 'तम्पातयाम्प्रथममास पपात पश्चात्' (रघु. ९।६१) इत्यादिप्रचलत्प्राचीनपरम्पराप्रयुक्त-प्रयोगानुरोधात् प्रयोगः।



# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "**वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "**सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय,** वाराणसी-२२१००२ (उ.प्र.)" इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या- ६९८१/५७

# सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **वेदान्तपरिभाषा** : वेदान्तविषयकोऽयं वादग्रन्थः श्रीमद्धर्मराजाध्वरीन्द्रप्रणीतो रामकृष्णाध्वरिकृत- '**शिखामणि**'टीकया, स्वामिश्रीमदमरदासप्रणीत'**मणिप्रभा**'टीकया चोपेतः प्रो.पारसनाथद्विवेदिमहोदयस्य टिप्पण्यादिभिः, भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सम्भूष्य सम्पाद्य च प्रकाशितः — ४००.००

२. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्रवृत्तिटीकाभ्यां**, श्रीमत्त्रिलोचनदासकृतया '**कातन्त्रवृत्तिपञ्जिका**'टीकया, कविराजसुषेणशर्म-कृतया '**कलापचन्द्र**'टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया,** विवरणात्मिकया भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः —प्रथमो भागः ३५०.००
द्वितीयो भागः प्रथमः खण्डः ५००.००
द्वितीयः खण्डः ६००.००

३. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। **श्रीरामेश्वरवृत्तेर्मुख्यांशेन** समलङ्कृतः '**नीरक्षीरविवेका**'भिधेन भाषाभाष्येण संवलितः प्रो. विद्यानिवासमिश्रैः डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

४. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां सिद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

५. **तर्कचन्द्रिका** : हरिरामविरचितो न्यायदर्शनस्य प्रकरणग्रन्थोऽयं डॉ. हरेरामत्रिपाठिना सुसम्पाद्य प्रकाशितः — १०.००

६. **विवेकज्योति** : स्वामिसच्चित्तीर्थविरचितोऽयं वेदान्तदर्शनस्याप्रतिम आधुनिकभाषामयो ग्रन्थः। ग्रन्थेऽस्मिन् प्रायः पञ्चाशदधिकत्रयोदशशततमान् प्रश्नान् उत्थाप्य प्रभावोत्पादकं समाधानं प्रस्तुतम्। ऐतिह्यात्मिकया सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सुसम्पाद्य प्रकाशितः — २८०.००

७. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। प्रथमभागस्यास्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशपाण्डेयेन सुसम्पाद्य प्रकाशितः — प्रथमो भाग : ४५०.००

८. **विष्णुस्मृति का विवेचनात्मक अध्ययन** : विष्णुस्मृतिं केन्द्रे संस्थाप्य पुङ्खानुपुङ्खभावेनानुसन्धानात्मक-विवेचनं प्रस्तूय डॉ. रञ्जनादूबेमहोदयया प्रणीतोऽयं ग्रन्थः प्रकाशितः — २८०.००

९. **आचारेन्दुः** : सदाचारस्य प्रतिपादकोऽयं ग्रन्थ आचार्यत्र्यम्बकमाटेमहोदयेन प्रणीतः। ग्रन्थेऽस्मिन् दैनन्दिनजीवनस्य धर्मशास्त्रप्रतिपादित आचारोऽङ्कितः। ग्रन्थोऽयं विस्तृतया भूमिकया परिशिष्टैश्च सम्भूष्य डॉ. व्यासमिश्रेण सम्पाद्य प्रकाशितः — १५०.००

१०. **देवीस्तोत्रम्** : यशस्करकविविरचितं देवीस्तोत्रं गिरिजादेव्याः स्तुतिपरकं पद्यकाव्यमिदम्। श्रीशोभाकरमिश्रकृते अलङ्काररत्नाकरे विवेचितानामलङ्काराणामुदाहरणे प्रस्तुतानि पद्यानीमानि। स्तोत्रमिदं डॉ. कालीप्रसाददूबेमहोदयेन सम्पाद्य प्रकाशितम्— १२.००

११. **पुराणप्रज्ञा** : पद्मभूषणपण्डितश्रीबलदेव-उपाध्यायानां जन्मशताब्दवसरे समायोजितेऽखिल-भारतीयपुराणसम्मेलने पठितानां विशिष्टनिबन्धानां सङ्कलनात्मकोऽयं ग्रन्थः। ग्रन्थोऽयं पुराणप्रज्ञापयितृ-संस्कृत-हिन्दी-आङ्ग्लभाषामयान् निबन्धान् सङ्कलय्य प्रो. गङ्गाधरपण्डामहोदयेन सुसम्पाद्य प्रकाशितः — २५०.००

१२. **मानवनीतिविवेचनम्** : प्रो. राधेश्यामधरद्विवेदिमहोदयेन प्रणीतो भारतीयसमाजनीतिमानवर्नात्योश्च विश्लेषणात्मकोऽनुसन्धानात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः — २८०.००

पत्रव्यवहारसङ्केतः–**निदेशकः, प्रकाशनसंस्थानस्य,** सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी- २२१००२